Sanctioned for use in Government Schools.

# SANSKRIT COURSE
OF
# READING

## SECOND PART

**A Collection of Select Prose and Poetical passages from Standard Sanskrit Works.**

Designed for the use of Students studying for the Bombay School Leaving Certificate Examination.


COMPILED BY

LAKSHMAN GANESH SHASTRI LELE,

*Prof. New Poona College*


New Edition.

# संस्कृतवाचनपाठमाला

## द्वितीयः खण्डः


लेलेकुलसम्भवेन गणेशशास्त्रितनूजन्मना प्रोफेसरोपाधिलांच्छितेन लक्ष्मणशर्मणा सङ्कलितः


Price One Rupee.

# FOREWORD.



This new edition of the Sanskrit Course Of Reading, part II. is offered to the reader with the following changes introduced in it:—

( 1 ) The bulk of the volume is considerably reduced by dropping some lessons found hard by an average pupil.

( 2 ) With a view to secure proper graduation and facilitate progress the arrangenment of lessons is entirely changed.

( 3 ) The old vocabulary, which was somewhat of a general nature has been replaced by another, comprising difficult words that occur in the text but do not find place either in the notes at the end of the book or in Dr. Bhandarkar's Second Book of Sanskrit.

The volume though reduced in size contains enough reading in Sanskrit, both intensive and rapid, for at least two years and includes choice selections in prose and poetry from renowned classical authors.

We feel confident these new features will render the volume more useful and fully meet the requirements of the learner.

*New Poona College.*
*Poona; July 1928.*

*THE EDITOR.*

# अनुक्रमणिका



# SANSKRIT COURSE OF READING

## SECOND PART

# संस्कृतवाचनपाठमाला.

## द्वितीयः खण्डः

### १. उद्यमेन हि सिध्यन्ति कार्याणि न मनोरथैः

कश्चित् कृषीवल आसन्ननिधनोऽचिन्तयत् । यथाद्ययावन्मया व्यवहृतं तथा दिवं याते मयि मत्सूनवोऽपि सदा व्यवहरेयुरिति । स इममभ्युपायं प्रयुयुजे । स सर्वान् खट्वोपान्त आहूयाचष्ट—पुत्राः, अयुष्मदीयं न किंचिन्मामकीनम् । अस्य कैदार्यस्यासां वाटिकानां च यूयमेव सर्वे प्रभवः । एतन्मुक्त्वा यन्मे साञ्चितं धनं तत् कुत्रचित् क्षेत्रेषु हस्तादधो निखातं विद्यते । अत इदं कैदारिकं न कस्यापि हस्ते प्रापयितव्यम् । तच्छ्रुत्वा सर्वे निश्चिक्युः—वृद्धेन किमपि द्रव्यं क्षेत्रेषु न्यखन्यत इति । तत उपरते तस्मिंस्ते कर्षणमिषेण तत्क्षेत्रं हस्तदघ्नमुच्चखनुः । तत्र निधिं तु न प्राप्नुवन् । परं सुकृष्टा भूमिरुप्तबीजं दशगुणमुत्ससर्ज । पुष्कलं धनमापुस्ते । तेषु पुत्रेषु कश्चिद्धीमान् बभूव । स सर्वानाचचक्षे—भो भ्रातरः । अयमेव स निधिर्यः क्षेत्रे निखात इति पित्रा निगदितम् ।

ईसब्नीतिकथाः ।

## २. शबर्युपाख्यानम्

त्यक्त्वा तद्विपिनं घोरं सिंहव्याघ्रादिदूषितम् ।
शनैः प्रापाश्रमपदं शबर्या रघुनन्दनः ॥ १
शबरी राममालोक्य लक्ष्मणेन समन्वितम् ।
आयान्तमाराद्धर्षेण प्रत्युत्थायाचिरेण सा ॥ २
पतित्वा पादयोरग्रे हर्षपूर्णाश्रुलोचना ।
स्वागतेनाभिनन्द्याथ स्वासने संन्यवेशयत् ॥ ३
रामलक्ष्मणयोः सम्यक् पादौ प्रक्षाल्य भक्तितः ।
तज्जलेनाभिषिच्याङ्गमथार्घ्यादिभिरादृता ॥ ४
संपूज्य विधिवद्रामं ससौमित्रिं सपर्यया ।
संगृहीतानि दिव्यानि रामार्थं शबरी मुदा ॥ ५
फलान्यमृतकल्पानि ददौ रामाय भक्तितः ।
पादौ संपूजयामास सुमनोभिः सुगन्धिभिः ॥ ६
कृतातिथ्यं रघुश्रेष्ठमुपविष्टं सहानुजम् ।
शबरी भक्तिसंपन्ना प्रांजलिर्वाक्यमब्रवीत् ॥ ७
अत्राश्रमे रघुश्रेष्ठ गुरवो मे महर्षयः ।
स्थिताः शुश्रूषणं तेषां कुर्वती समुपस्थिता ॥ ८
बहुवर्षसहस्राणि गतास्ते ब्रह्मणः पदम् ।
गमिष्यन्तोऽब्रुवन् मां त्वं वसात्रैव समाहिता ॥ ९
रामो दाशरथिर्जातः परमात्मा सनातनः ।
राक्षसानां वधार्थाय ऋषीणां रक्षणाय च ॥ १०
आगमिष्यति चैकाग्रध्याननिष्ठा स्थिरा भव ।
इदानीं चित्रकूटाद्रावाश्रमे वसति प्रभुः ॥ ११
यावदागमनं तस्य तावद्रक्ष कलेवरम् ।
दृष्ट्वैव राघवं दग्ध्वा देहं यास्यासि तत्पदम् ॥ १२

तथैवाकरवं राम त्वद्दर्शनैकपरायणा ।
प्रतीक्ष्यागमनं तेऽद्य सफलं गुरुभाषितम् ॥ १३
तव सन्दर्शनं राम गुरूणामपि मे न हि ।
योषिन्मूढाऽप्रमेयात्मन् हीनजातिसमुद्भवा ॥ १४
कथं रामाद्य मे दृष्टस्त्वं मनोवागगोचरः।
स्तोतुं न जाने देवेश किं करोमि प्रसीद मे ॥ १५

श्रीराम उवाच—

पुंस्त्वे स्त्रीत्वे विशेषो वा जातिनामाश्रमादयः ।
न कारणं मद्भजने भक्तिरेव हि कारणम् ॥ १६
यज्ञदानतपोभिर्वा वेदाध्ययनकर्मभिः ।
नैव द्रष्टुमहं शक्यो मद्भक्तिविमुखैः कदा ॥ १७
तस्माद्भामिनि वक्ष्येऽहमिदानीं भक्तिसाधनम् ।
सतां संगतिरेवात्र साधनं प्रथमं स्मृतम् ॥ १८
यस्मान्मद्भक्तियुक्ता त्वं ततोऽहं त्वामुपस्थितः ।
इतो मद्दर्शनान्मुक्तिस्तव नास्त्यत्र संशयः ॥ १९
श्रुत्वा श्रीरामवचनं प्रविवेश हुताशनम् ।
तत्क्षणं तत्प्रसादाच्च प्राप मोक्षं सुदुर्लभम् ॥ २०

अध्यात्मरामायणम् ।

---

## ३. सर्वथादैवावलम्बो नाभिनन्दनीयः

कस्मिंश्चिज्जलाशयेऽनागतविधाता प्रत्युत्पन्नमतिर्यद्भविष्यश्चेति त्रयो मत्स्याः सन्ति । अथ कदाचित्तं जलाशयं दृष्ट्वाऽऽगच्छद्भिर्मत्स्यजीविभिरुक्तं यदहो बहुमत्स्योऽयं ह्रदः । कदाचिदपि नास्माभिरन्वेषितः । तदद्याहारवृत्तिः सञ्जाता । सन्ध्यासमयश्च सम्भूतः । ततः प्रभातेऽ-

त्रागन्तव्यमिति निश्चयः। अतस्तेषां तत् कुलिशपातोपमं वचः समाकर्ण्यानागतविधाता सर्वान् मत्स्यानाहूयेदमूचे। अहो श्रुतं भवद्भिर्यन्मत्स्यजीविभिरभिहितम्। तद्रात्रावपि किंचिद् गम्यतां समीपवर्ति सरः। तन्नूनं प्रभातसमये मत्स्यजीविनोऽत्र समागम्य मत्स्यसंक्षयं करिष्यन्ति। एतन्मम मनसि वर्तते। तन्न युक्तं सांप्रतं क्षणमप्यत्रावस्थातुम्। तदाकर्ण्य प्रत्युत्पन्नमतिः प्राह। अहो सत्यमभिहितं भवता। ममाप्यभीष्टमेतत्। तदन्यत्र गम्यताम्। अथ तत् समाकर्ण्य प्रोच्चैर्विहस्य यद्भविष्यः प्रोवाच। अहो न भवद्भ्यां मन्त्रितं सम्यगेतत्। यतः किं वाङ्मात्रेणापि तेषां पितृपैतामहिकं सर एतत् त्यक्तुं युज्यते। तद् यद्यायुःक्षयोऽस्ति तदन्यत्र गतानामपि मृत्युर्भविष्यत्येव। तदहं न यास्यामि भवद्भ्यां च यत्प्रतिभाति तत् कार्यम्। अथ तस्य तं निश्चयं ज्ञात्वाऽनागतविधाता प्रत्युत्पन्नमतिश्च निष्क्रान्तौ सह परिजनेन। अथ प्रभाते तैर्मत्स्यजीविभिर्जालैस्तं जलाशयमालोड्य यद्भविष्येण सह स निर्मत्स्यतां नीतः।

पञ्चतन्त्रम् १—

---

## ४. दुर्योधनं प्रति विदुरोपदेशः

अथ वक्ष्यामि ते राजन् हितं यत्स्यात् कुरून् प्रति।
वचः श्रेयस्करं धर्म्यं ब्रुवतस्तन्निबोध मे॥ १

न राज्यं प्राप्तमित्येव वर्तितव्यमसांप्रतम्।
श्रियं ह्यविनयो हन्ति जरा रूपमिवोत्तमम्॥ २

भक्ष्योत्तमप्रतिच्छन्नं मत्स्यो बडिशमायसम्।
लोभाभिपाती ग्रसते नानुबन्धमवेक्षते॥ ३

यच्छक्यं ग्रसितुं ग्रस्यं ग्रस्तं परिणमेच्च यत् ।
हितं च परिणामे यत्तदाद्यं भूतिमिच्छता ॥ ४
वनस्पतेरपक्वानि फलानि प्रचिनोति यः ।
स नाप्नोति रसं तेभ्यो बीजं चास्य विनश्यति ॥ ५
यस्तु पक्वमुपादत्ते काले परिणतं फलम् ।
फलाद्रसं स लभते बीजाच्चैव फलं पुनः ॥ ६
यथा मधु समादत्ते रक्षन् पुष्पाणि षट्पदः ।
तद्वदर्थान् मनुष्येभ्य आदद्यादविहिंसया । ७
चक्षुषा मनसा वाचा कर्मणा च चतुर्विधम् ।
प्रसादयति यो लोकं तं लोकोऽनुप्रसीदति ॥ ८
यस्मात्त्रस्यन्ति भूतानि मृगव्याधान्मृगा इव ।
सागरान्तामपि महीं लब्ध्वा स परिहीयते ॥ ९
पितृपैतामहं राज्यं प्राप्तवान् स्वेन कर्मणा ।
वायुरभ्रमिवासाद्य भ्रंशयत्यनये स्थितः ॥ १०
धर्ममाचरतो राज्ञः सद्भिश्चरितमादितः ।
वसुधा वसुसंपूर्णा वर्धते भूतिवर्धिनी ॥ ११
धर्मेण राज्यं विंदेत धर्मेण परिपालयेत् ।
धर्ममूलां श्रियं प्राप्य न जहाति न हीयते ॥ १२
गंधेन गावः पश्यन्ति वेदैः पश्यन्ति ब्राह्मणाः ।
चारैः पश्यन्ति राजानश्चक्षुर्भ्यामितरे जनाः ॥ १३
सत्येन रक्ष्यते धर्मो विद्या योगेन रक्ष्यते ।
मृजया रक्ष्यते रूपं कुलं वृत्तेन रक्ष्यते ॥ १४
न कुलं वृत्तहीनस्य प्रमाणमिति मे मतिः ।
अन्तेष्वपि हि जातानां वृत्तमेव विशिष्यते ॥ १५

विद्यामदो धनमदस्तृतीयोऽभिजनो मदः ।
मदा एतेऽवलिप्तानामेत एव सतां दमः ॥ १६
शीलं प्रधानं पुरुषे तद्यस्येह प्रणश्यति ।
न तस्य जीवितेनार्थो न धनेन न बन्धुभिः ॥ १७
वश्येन्द्रियं जितात्मानं धृतदण्डं विकारिषु ।
परीक्ष्यकारिणं धीरमत्यंतं श्रीर्निषेवते ॥ १८
रथः शरीरं पुरुषस्य राजन्नात्मा नियंतेन्द्रियाण्यस्य चाश्वाः ।
तैरप्रमत्तः कुशली सदश्वैर्दान्तैः सुखं याति रथीव धीरः ॥ १९
धर्मार्थौ यः परित्यज्य स्यादिंद्रियवशानुगः ।
श्रीप्राणधनदारेभ्यः क्षिप्रं स परिहीयते ॥ २०
अभ्यावहति कल्याणं विविधं वाक् सुभाषिता ।
सैव दुर्भाषिता राजन्ननर्थायोपपद्यते ॥ २१

महाभारतम् ।

---

## ५. श्रमविभागः

**रुक्मिणी**——सखि कमले । श्वः प्रभाते मे बहु करणीयम् । तत्कथं निर्वर्त्यमिति चिन्ताकुलं मे मनः ।

**कमला**—काऽत्र चिन्ता । अहं तव साहाय्यं करिष्यामि । नर्मदामपि तत् कर्तुमुपदेक्ष्यामि । इत्यावयोः साहाय्येन सुलभा कार्यसिद्धिः ।

**रुक्मिणी**——अपि नर्मदा प्रतिपद्यते तत्कर्तुम् । यावत्तामेव पृच्छामि । अयि नर्मदे । प्रभाते मम बहु करणीयम् । कच्चिदल्पं साहाय्यं करिष्यसि ।

**नर्मदा**——ततः को मे लाभः । तन्न कर्तुमुत्सहे । पुनर्ममापि प्राभातिकमस्त्येव । तत् का करिष्यति ।

**कमला**—सखि नर्मदे । मैवं रुक्मिणीवचोऽवज्ञातुमर्हसि । अन्योन्यसाहाय्यं मनुष्यधर्मः । तत् साहाय्यं कुर्वत्यास्तव किं हीयते । तव गृहकृत्यं चाल्पम् । तत् पश्चादपि एकाकिन्या सुकरम् । तत्रापि चेदन्यापेक्षा, अहं साहाय्यं करिष्यामि ।

**नर्मदा**—न श्रामयामि त्वाम् । अहमेवैकाकिनी तल्लघुलघु समाप्य विश्रांतिसुखं कथं नानुभवेयम् ।

**कमला**—सुखं निर्विश्यतां विश्रान्तिसुखम् । तथा कर्तुं का निषेधति । परमेतावदेव पृच्छामि तव गृहकृत्यं त्वमेकाकिनी लघुतरं करिष्यसे किम् ॥

**नर्मदा**—असंशयं त्वद्द्वितीयैव ।

**कमला**—तर्हि साहाय्यं किमिति नानुमन्यसे ।

**नर्मदा**—स्वावलंबमेवाहं बहु मन्ये । न परसाहाय्यम् । आत्मबलेनैव सर्वाः क्रिया निर्वर्तयामि ।

**रुक्मिणी**—अयि नर्मदे । स्वावलम्बो ममापि बहुमतः । किन्तु आत्मबलातिगे कार्ये परसाहाय्यप्रार्थनमावश्यकं भवति । न ह्येकपुरुषसाध्याः सकलाः क्रियाः । कोऽपि गृहवस्त्रादि सकलं वस्तुजातं स्वयमेको निर्मातुं न प्रभवेत् । किमुत च तत्तच्छिल्पिसंघनिर्मितमेव सुभगम् । अतो विपश्चितः परस्परं श्रमान् विभज्य एकैकमेव विषयमङ्गीकृत्य तं सर्वाऽऽत्मना परिशीलयन्ति । तस्मिन्नैपुण्यमुपगताश्च लोकाराधनाय प्रवर्तन्ते । एवं श्रमविभागेन संसारयात्रा सुखकरी भवति ।

**कमला**—परिचिन्त्यतां परराष्ट्राणामुद्योगपद्धतिः । आफलोदयकर्माण उद्यमशीला यूरोपीया निजाद्भुतकृत्यैर्लोकान् विस्मापयन्ति । सुसंस्कृतं सुजातं च वस्तुजातं निर्मिमते । तस्य श्रमविभक्तिरेव बीजम् ।

**रुक्मिणी**—पाणितलस्थे निदर्शने कुत इयद् दूरम् । अस्माकं गृहव्यवस्थैव सूक्ष्मदृष्ट्या विलोक्यताम् । गृहेशः सकलारम्भमूलं धनमर्ज-

यति । तेन च धान्यादि वस्तुजातं क्रीत्वा गृहीण्यै समर्पयति । सा-तत्साधु व्यवस्थाप्य पाकादि च निष्पाद्य सकलं कुटुम्बकं सुखयति । सोऽयं जीवनक्रमः श्रमविभजनेनैव सुखकरो नान्यथा । विभक्तः खलु श्रमोऽतीव सुसहो भूत्वा महते फलोदयाय कल्पते ।

**नर्मदा**—स्फुटतरमज्ञासिषं श्रमविभागतत्त्वम् । युवाभ्यां विवृतं च तत्सम्यक् प्रविष्टं मे हृदयम् । अधुना शिरसा धारयामि युवयोर्वचः । यावच्छक्यं च तवार्थसाधने प्रयतिष्ये ।

**रुक्मिणी**—प्रीतास्मि युवयोः परमादरेण ।

रङ्गाचार्याः

---

## ६. पुष्पकविमानेन वियद्विगाहमानो रामचन्द्रो वैदेहीं कतिचित् पूर्वपरिचितस्थलानि दर्शयति ।

ऋष्यमूकसमीपे स वैदेहीं पुनरब्रवीत् ।
दृश्यतेऽसौ महान् सीते सविद्युदिव तोयदः ॥ १
ऋष्यमूको गिरिवरः काञ्चनैर्धातुभिर्वृतः ।
अत्राहं वानरेन्द्रेण सुग्रीवेण समागतः ॥ २
समयश्च कृतः सीते वधार्थं वालिनो मया ।
एषा सा दृश्यते पम्पा नलिनीचित्रकानना ॥ ३
त्वया विहीनो यत्राहं विलापं कृतवान् प्रिये ।
अस्यास्तीरे मया दृष्टा शबरी धर्मचारिणी ॥ ४
अत्र योजनबाहुश्च कबन्धो निहतो मया ।
दृश्यतेऽसौ जनस्थाने श्रीमान् सीते वनस्पतिः ॥ ५
जटायुश्च महातेजास्तव हेतोर्विलासिनि ।
रावणेन हतो यत्र पक्षिणां प्रवरो बली ॥ ६

एतत्तदाश्रमपदमस्माकं वरवर्णिनि ।
पर्णशाला तथा चित्रा दृश्यते शुभदर्शने ॥ ७
यत्र त्वं राक्षसेन्द्रेण रावणेन हृता बलात् ।
एषा गोदावरी रम्या प्रसन्नसलिला शुभा ॥ ८
अगस्त्यस्याश्रमश्चैव दृश्यते कदलीवृतः ।
दृश्यते चैव वैदेहि शरभङ्गाश्रमो महान् ॥ ९
एते ते तापसा देवि दृश्यन्ते पुण्यदर्शनाः ।
अत्रिः कुलपतिर्यत्र सूर्यवैश्वानरोपमः ॥ १०
अस्मिन्देशे महाकायो विराधो निहतो मया ।
अत्र सीते त्वया दृष्टा तापसी धर्मचारिणी ॥ ११
असौ सुतनु शैलेन्द्रश्चित्रकूटः प्रकाशते ।
अत्र मां कैकयीपुत्रः प्रसादयितुमागतः ॥ १२
एषा सा यमुना रम्या दृश्यते चित्रकानना ।
भारद्वाजाश्रमः श्रीमान् दृश्यते चैव मैथिलि ॥ १३
इयं च दृश्यते गङ्गा पुण्या त्रिपथगा नदी ।
शृङ्गवेरपुरं चैतद्गुहो यत्र सखा मम ॥ १४
एषा सा दृश्यते सीते राजधानी पितुर्मम ।
अयोध्या कुरु वैदेहि नतिमस्यै कृताञ्जलिः ॥ १५

रामायणम् ।

---

## ७. टिट्टिभीसमुद्रयोः

कस्मिंश्चित्समुद्रैकदेशे टिट्टिभदंपती वसतः । ततो गच्छति काले टिट्टिभी गर्भमाधत्त । आसन्नप्रसवा सा टिट्टिभमूचे । भोः कांत मम प्रसवसमयो वर्तते । तद्विचिंत्यतां किमपि निरुपद्रवं स्थानं येन तत्राह-

मण्डमोक्षणं करोमि । स आह । भद्रे रम्योऽयं समुद्रप्रदेशः । तदत्रैव प्रसवः कार्यः । सा प्राह । अत्र पूर्णिमादिने समुद्रवेला चलति । सा मत्तगजेंद्रानप्याकर्षति । तद् दूरमन्यत्र किंचित्स्थानमन्विष्यताम् । तच्छ्रुत्वा विहस्य टिट्टिभ आह । भद्रे न युक्तमुक्तं भवत्या । का मात्रा समुद्रस्य यो मम दूषयिष्यति प्रसूतिं तद्विश्रब्धात्रैव गर्भं मुंच । तच्छ्रुत्वा समुद्रश्चिंतयामास । अहो गर्वः पक्षिकीटस्यास्य । तन्मयास्य प्रमाणं कुतूहलादपि द्रष्टव्यम् । किं ममैषोऽण्डापहारे करिष्यति । इति चिंतयित्वा स्थितः । अथ प्रसवानंतरं प्राणयात्रार्थं गतायाष्टिट्टिभ्याः समुद्रोऽण्डान्यपजहार । अथायाता सा प्रसवस्थानं शून्यमवलोक्य प्रलपंती टिट्टिभमूचे । मो मूर्ख कथितमासीन्मया ते यत्समुद्रवेलयाण्डानां विनाशो भविष्यति तद् दूरतरं व्रजाव इति । परं मूढतयाहंकारमाश्रित्य मम वचनं नाकरोः । स आह । भद्रे किं मां मूर्खं संभावयसि । तत्पश्य मे बुद्धिप्रभावं यावदेनं दुष्टसमुद्रं शोषयामि । सा प्राह । अहो कस्ते समुद्रेण सह विग्रहः । अथवा साध्विदमुच्यते-

अविदित्वाऽऽत्मनः शक्तिं परस्य च समुत्सुकः ।
व्रजन्नभिमुखो नाशं याति वह्नौ पतंगवत् ॥

स आह । प्रिये मा मैवं वद । येषामुत्साहशक्तिर्भवति ते स्वल्पा अपि गुरूनपि विक्रमन्ते । तदनया चंच्वास्य सकलं तोयं शुष्कस्थलतां नयामि । टिट्टिभ्याह भोः कांत यत्र जाह्नवी नवनदीशतानि गृहीत्वा नित्यमेव प्रविशति तथा सिंधुश्च तत्कथमेतादृशं समुद्रं विप्रुषवाहिन्या चंच्वा शोषयिष्यसि । तत्किमश्रद्धेयेनोक्तेनेति । स आह । अनिर्वेदः श्रियो मूलम् । मम चंचुर्लोहसंनिभा । अहोरात्राणि दीर्घाणि च । तत्किं समुद्रो न शुष्यति । सा प्राह । यदि त्वयावश्यं समुद्रेण सह वैरानुष्ठानं कार्यं तदन्यानपि विहगानाहूय सुहृज्जनसहित एवं समाचर । यतोऽसाराणामपि बहूनां समवयो दुर्जयः । सम्यङ्

मंत्रितं भवत्येत्युक्त्वा स बकसारसमयूरादीनाहूय भोः पराभूतोऽहं समुद्रेणाण्डापहारेण तच्चिन्त्यतामस्य शोषणोपाय इति प्रोवाच । ते संमंत्र्य प्रोचुः । अशक्ता वयमस्मिन्कर्मणि । तदस्माकं स्वामी वैनतेयोऽस्ति । तत्सकाशं गत्वैतत्परिभवस्थानं तस्मै निवेदयामो येन स्वजातिपरिभवकुपितो वैरानृण्यं गच्छति । तथा निश्चित्य सर्वे ते गरुडस्य सकाशं गत्वा टिट्टिभवृत्तांतं तस्मायकथयन् । तं समाकर्ण्य गरुडः कोपाविष्टः सन् समुद्रशोषणानिश्चयं चकार । अत्रान्तरे विष्णुदूत आगत्य तमुवाच । भो गरुत्मन् देवकार्येण श्रीभगवानमरावतीं यास्यति तत् सत्वरं त्वयागम्यतामिति । गरुडः साभिमानं प्राह । भो दूत किं मया कुभृत्येन भगवान्करिष्यति । तद्गत्वा वद अन्यो भृत्यो वाहनायास्मत्स्थाने क्रियताम् । मदीयो नमस्कारश्च भगवते वाच्यः । दूत आह । भो वैनतेय त्वया कदाचिदपि भगवन्तं प्रति नैतादृगभिहितम् । तत्कथय किं ते भगवतापमानस्थानं कृतम् । गरुड आह । भगवदाश्रयभूतेन समुद्रेणास्मट्टिट्टिभाण्डान्यपहृतानि । तद्यदि निग्रहं न करोति तदहं भगवतो न भृत्य इत्येष निश्चयस्त्वया वाच्यः । अथ दूतमुखेन कुपितं वैनतेयं ज्ञात्वा भगवान् सत्वरं तत्सकाशं जगाम । वैनतेयोऽपि गृहागतं भगवंतमवलोक्य त्रपाधोमुखः प्रणम्योवाच । भगवंस्त्वदाश्रयोन्मत्तेन समुद्रेण मम भृत्यस्याण्डान्यपहृत्य मेऽपमानस्थानं कृतं परं युष्मल्लज्जयाहं तं स्थलतां न नयामि । यतः स्वामिभयाच्छुनोऽपि प्रहारो न दीयते । तच्छ्रुत्वा भगवानाह । सत्यमभिहितम् । तदागच्छ येनाण्डानि समुद्रादादाय टिट्टिभं सम्भावयामः । तथानुष्ठिते समुद्रो भगवता निर्भर्त्स्याग्नेयं शरं संधायाभिहितः । भो दुरात्मन् दीयन्तां टिट्टिभाण्डानि । नो चेत्स्थलतां त्वां नयामि । ततः समुद्रेण सभयेनाण्डानि तानि प्रदत्तानि टिट्टिभेनापि स्वभार्यायै समर्पितानि ।

पञ्चतन्त्रम् ।

---

## ८ तन्मित्रमापदि सुखे च समक्रियं यत्।

अस्ति गोदावरीतीरे विशालः शाल्मलीतरुः। तत्र नानादिग्देशाद्दागत्य रात्रौ पक्षिणो निवसन्ति। अथ कदाचिदवसन्नायां रात्रावस्ताचलचूडावलम्बिनि भगवति कुमुदिनीनायके चन्द्रमसि तत्रैव कश्चिद् व्याधस्तण्डुलान् विकीर्य जालं वितस्तार। प्रच्छन्नो भूत्वा स्थितश्च। तस्मिन्नेव काले चित्रग्रीवनामा कपोतराजः सपरिवारो वियति विसर्पंस्तांस्तण्डुलकणानवलोकयामास। ततः कपोतराजस्तण्डुलकणलुब्धान् कपोतान् प्रत्याह—कुतोऽत्र निर्जने वने तण्डुलकणानां सम्भवः। एतन्निरूप्यतां तावत्। भद्रमिदं न पश्यामि। सर्वथाऽविचारितं कर्म न कर्तव्यम्। तद्वचनं श्रुत्वा कश्चित्कपोतः सदर्पमाह। आः किमेवमुच्यते।

वृद्धानां वचनं ग्राह्यमापत्काले ह्युपस्थिते।
सर्वत्रैवं विचारेण भोजनेऽप्यप्रवर्तनम्॥ १

एतच्छ्रुत्वा सर्वे कपोतास्तत्रोपविष्टाः। यतो बहुश्रुता अपि लोभमोहिताः क्लिश्यन्ते। प्रायः समापन्नविपत्तिकाले पुंसां धियो मलिनीभवन्ति। अनन्तरं सर्वे जालेन बद्धा बभूवुः। ततो यस्य वचनात्तत्रावलम्बितास्तं सर्वे तिरस्कुर्वंति। तस्य तिरस्कारं श्रुत्वा चित्रग्रीव उवाच–नायमस्य दोषः। यत आपतन्तीनामापदां हितोऽपि हेतुतामायाति। विपत्काले विस्मय एव कापुरुषलक्षणम्। तदत्र धैर्यमवलम्ब्य प्रतीकारश्चिन्त्यताम्। यतः

विपदि धैर्यमथाभ्युदये क्षमा। सदसि वाक्पटुता युधि विक्रमः।
यशसि चाभिरुचिर्व्यसनं श्रुतौ। प्रकृतिसिद्धमिदं हि महात्मनाम् २

अन्यच्च।

षड् दोषाः पुरुषेणेह हातव्या भूतिमिच्छता।
निद्रा तंद्रा भयं क्रोध आलस्यं दीर्घसूत्रता॥ ३

इदानीं क्रियतामेवम् । सर्वैरेकचित्तीभूय जालमादायोड्डीयताम् । यतोऽल्पानामपि वस्तूनां संहतिः कार्यसाधिका भवति । इति विचिन्त्य पक्षिणः सर्वे जालमादायोत्पतिताः । अनन्तरं स व्याधः सुदूराज्जालापहारकांस्तानवलोक्य पश्चाद्धावन्नचिन्तयत्—

संहतास्तु हरन्तीमे जालं मम विहंगमाः ।
यदा तु निपतिष्यन्ति वशमेष्यन्ति ते तदा ॥ ४

ततस्तेषु चक्षुर्विषयातिक्रान्तेषु पक्षिषु स व्याधो निवृत्तः । अथ लुब्धकं निवृत्तं दृष्ट्वा कपोता ऊचुः । किमिदानीं कर्तुमुचितम् । चित्रग्रीव उवाच ।

माता मित्रं पिता चेति स्वभावात्त्रितयं हितम् ।
कार्यकारणतश्चान्ये भवन्ति हितबुद्धयः ॥ ५

तस्मादस्माकं मित्रं हिरण्यको नाम मूषकराजो गण्डकीतीरे चित्रवने निवसति । सोऽस्माकं पाशांश्छेत्स्यति । इत्यालोच्य सर्वे हिरण्यकविवरसमीपं गताः । हिरण्यकश्च सर्वदापायशङ्कया शतद्वारं विवरं कृत्वा निवसति । ततो हिरण्यकः कपोतावपातभयाच्चकितस्तूष्णीं स्थितः । चित्रग्रीव उवाच—सखे हिरण्यक किमस्मान् न संभाषसे । ततो हिरण्यकस्तद्वचनं प्रत्यभिज्ञाय ससंभ्रमं बहिर्निःसृत्याब्रवीत्—आः पुण्यवानस्मि । प्रियसुहृन्मे चित्रग्रीवः समायातः ।

यस्य मित्रेण संभाषा यस्य मित्रेण संस्थितिः ।
यस्य मित्रेण संलापस्ततो नास्तीह पुण्यवान् ॥ ६

पाशबद्धांश्चैतान् दृष्ट्वा सविस्मयः क्षणं स्थित्वोवाच—सखे किमेतत् । चित्रग्रीवोऽवदत्—सखे । अस्माकं कर्मणः फलमेतत् । एतच्छ्रुत्वा हिरण्यकश्चित्रग्रीवस्य बन्धनं छेत्तुं सत्वरमुपसर्पति । चित्रग्रीव उवाच । मित्र मा मैवम् । अस्मदाश्रितानामेषां तावत्पाशांश्छिन्धि । मम पाशान् पश्चाच् छेत्स्यसि । हिरण्यकोऽप्याह । अहमल्पशक्तिः । दन्ताश्च मे

कोमलाः । तदेषां पाशांश्छेत्तुं कथं समर्थः । तावन्मे दन्ता न त्रुट्यन्ति तावत्तव पाशांश्छिनद्मि । तदनन्तरमेतेषामपि बन्धनं यावच्छक्यं छेत्स्यामि । चित्रग्रीव उवाच—अस्त्वेवम् । तथापि यथाशक्त्यैतेषां बन्धनं खण्डय । हिरण्यकेनोक्तम् । आत्मपरित्यागेन यदाश्रितानां परिरक्षणं तन्न नीतिविदां सम्मतम् । चित्रग्रीव उवाच—सखे नीतिस्तावदीदृश्येव । किन्त्वहमस्मदाश्रितानां दुःखं सोढुमसमर्थः सर्वथा । तेनेदं ब्रवीमि । इत्याकर्ण्य हिरण्यकः प्रहृष्टमनाः पुलकितः सन्नब्रवीत् । साधु मित्र साधु । अनेनाश्रितवात्सल्येन त्रैलोक्यस्यापि प्रभुत्वं त्वयि युज्यते । एवमुक्त्वा तेन सर्वेषां बन्धनानि छिन्नानि । ततो हिरण्यकः सर्वान् सादरं संपूज्याह । सखे चित्रग्रीव सर्वथात्र जालबन्धनविधौ दोषमाशङ्क्यात्मन्यवज्ञा न कर्तव्या । इति प्रबोध्यातिथ्यं कृत्वालिङ्ग्य च चित्रग्रीवस्तेन संप्रेषित इष्टदेशान् सपरिवारो ययौ । हिरण्यकोऽपि स्वविवरं प्रविष्टः ।

हितोपदेशः ।

---

## ९. व्यसनमुक्तस्य कपोतमिथुनस्य

अथ कस्मिंश्चिदरण्ये कपोतमिथुनं चिराय न्यग्रोधमध्यवात्सीत् । एकदा स कपोतः कपोतीमवोचत्—हा प्रिये मरणकाल आवयोः प्रत्यासन्नकल्पः । पश्य वृक्षस्यास्य तले कोऽपि व्याधोऽधिज्यधन्वा शरव्यं नौ कर्तुमिषुं संदधाति । यद्युड्डीयेतो निर्गन्तुं यतेवहि तदुपरिष्टादेव नाववस्कद्य जिघत्सुः श्येनः परिभ्रमन्नास्ते । कथमिवापदमिमामुत्तरेवेति । इत्थं दुःखाभिभूतं कपोतं सान्त्वयितुं कपोती प्राहस्म—किमिति वल्लभ चिन्ताकुलो भवान् । ईश्वरस्य प्रसादाद्विरविदापतितानि संकटानि तृणनाशं नश्येयुः । कोऽर्थ आवयोरनया

चिन्तया । ईश्वरेच्छा बलीयसीति । अनवसितवचनायामेव तस्यां कश्चिज्जीवितापहः सर्पस्तत्रागत्य व्याधस्य दक्षिणं पादतलमदशत् । तद्विषवेगादञ्जसा व्याधोऽम्रियत । श्येनोपि कपोतावत्तुकामः परिभ्रमन्यदृच्छयेष्वसनमुक्तेन शरेण विद्धो भूमौ न्यपतत् । एवं तत्कपोतमिथुनं मृत्युभयविनिर्मुक्तमभवत् ।

Companion to Sanskrit Composition.

---

## १०. श्रेयः सत्ये प्रतिष्ठितम् ।

कस्यचिद्वनवर्तिनो नदीरोधोवर्तिनमनोकहं लुनतो हस्तात् सहसा निःसृतः कुठारो जलमभजत् । ततः स शुशोच मुक्तकण्ठं चारोदीत् । तस्य विलापं श्रुत्वा वरुण आविरासीत् । तं वनस्थः शोककारणमचकथत् । तदा पाशी जलान्तः प्रविश्य शातकौम्भं स्वधितिं हस्तेनादायोदमज्जत् । तं वनवासिने दर्शयित्वा पृच्छति रे किमयं ते परशुः । स उवाच । नायं मदीय इति । ततो भूयोऽपि निमज्ज्य राजतं व्रश्चनमुददीधरत् । तं दृष्ट्वा नायमपि ममेत्यरण्यसदुवाच । तृतीयोन्मज्जने विपिनचारिणो नष्टां वृक्षादनीं गृहीत्वोदगच्छत् । तां स मुदा स्वीचकाराप्पतिमुपकारिणममंस्त च । तदा वनचरस्याजिह्मव्यवहारदर्शनेन संतुष्टो यादसांपतिस्तापनीयराजतौ द्वावपि कुठारौ तस्मै पारितोषिकत्वेन ददौ । उदन्तमेनं तस्य सजूः श्रुत्वा सरितं गत्वा हस्तस्थितकुठारं बुद्धिपूर्वं सलिलेऽपातयत् कुठारनाशं सत्यीकृत्य परिदेवितुं प्राक्रंस्त च । तच्छ्रुत्वा यथापूर्वं प्रचेता अधितष्ठौ । स निमज्ज्योन्मज्ज्य सौवर्णं परश्वधमानयंस्तं वनौकसमन्वयुङ्क्त किमयमेव ते कुठार इति । अष्टापदनिर्मितं तं दृष्ट्वा तस्य बुद्धिभ्रंशो जातः । स प्रचेत-

समाह बाढमयमेव मम कुठार इति । एवमुक्त्वा लोभेन पाशिनो हस्तात्तमादातुं प्रवृत्तः । अत्रान्तरे स तं संतर्ज्य सौवर्णकुठारमदत्वा तस्य कुठारमपि तस्मै न ददौ ।

ईसब्नीतिकथासारः ।

---

## ११. दमयन्तीविलपनम् ।

अपक्रान्ते नले राजन् दमयन्ती गतक्लमा ।
अबुध्यत वरारोहा संत्रस्ता विजने वने ॥ १
अपश्यन्ती स्वभर्तारं शोकदुःखसमन्विता ।
प्राक्रोशदुच्चैः संत्रस्ता महाराज तपस्विनी ॥ २
हा नाथ हा महाराज हा स्वामिन् किं जहासि माम् ।
हा हतास्मि विनष्टास्मि भीतास्मि विजने वने ॥ ३
ननु नाम महाराज धर्मज्ञः सत्यवागसि ।
कथमुक्त्वा तथा सत्यं सुप्तामुत्सृज्य कानने ॥ ४
कथमुत्सृज्य गंतासि दक्षां भार्यामनुव्रताम् ।
विशेषतोऽनपकृते परेणापकृते सति ॥ ५
शक्यसे ता गिरः सम्यक्कर्तुं मयि नरेश्वर ।
यास्तेषां लोकपालानां संनिधौ कथिताः पुरा ॥ ६
नाकाले विहितो मृत्युर्मर्त्यानां पुरुषर्षभ ।
यत्र कांता त्वयोत्सृष्टा मुहूर्तमपि जीवति ॥ ७
पर्याप्तः परिहासोऽयमेतावान्पुरुषर्षभ ।
भीताहमतिदुर्धर्ष दर्शयात्मानमीश्वर ॥ ८
दृश्यसे दृश्यसे राजन्नेष दृष्टोऽसि नैषध ।
आवार्य गुल्मैरात्मानं किं मां न प्रतिभाषसे ॥ ९

नृशंसं बत राजेंद्र यन्मामेवंगतामिह ।
विलपंतीं समागम्य नाश्वासयसि पार्थिव ॥ १०
न शोचाम्यहमात्मानं न चान्यदपि किंचन ।
कथं नु भवितास्येक इति त्वां नृप शोचिमि ॥ ११
कथं नु राजंस्तृषितः क्षुधितः श्रमकर्शितः ।
सायाह्ने वृक्षमूलेषु मामपश्यन्भविष्यासि ॥ १२
ततः सा तीव्रशोकार्ता प्रदीप्तेव च मन्युना ।
इतश्चेतश्च रुदती पर्यधावत्सुदुःखिता ॥ १३
मुहुरुत्पतते बाला मुहुः पतति विह्वला ।
मुहुरालीयते भीता मुहुः क्रोशति रोदिति ॥ १४
अतीव शोकसंतप्ता मुहुर्निःश्वस्य विह्वला ।
उवाच भैमी निःश्वस्य रुदत्यथ पतिव्रता ॥ १५
यस्याभिशापाद् दुःखार्तो दुःखं विंदति नैषधः ।
तस्य भूतस्य नो दुःखाद् दुःखमप्यधिकं भवेत् ॥ १६
अपापचेतसं पापो य एवं कृतवान्नलम् ।
तस्माद् दुःखतरं प्राप्य स जीवत्वसुजीविकाम् ॥ १७
एवं तु विलपंती सा राज्ञो भार्या महात्मनः ।
अन्वेषमाणा भर्तारं वने श्वापदसेविते ॥ १८
उन्मत्तवद्भीमसुता विलपंती इतस्ततः ।
हा हा राजन्निति मुहुरितश्चेतश्च धावति ॥ १९
तां क्रंदमानामत्यर्थं कुररीमिव वाशतीम् ।
करुणं बहु शोचंतीं विलपंतीं मुहुर्मुहुः ॥ २०
सहसाभ्यागतां भैमीमभ्यासपरिवर्तिनीम् ।
जग्राहाजगरो ग्राहो महाकायः क्षुधान्वितः ॥ २१

सा ग्रस्यमाना ग्राहेण शोकेन च परिप्लुता ।
नात्मानं शोचति तथा यथा शोचति नैषधम् ॥ २२
हा नाथ मामिह वने ग्रस्यमानामनाथवत् ।
ग्राहेणानेन विजने किमर्थं नानुधावसि ॥ २३

महाभारतम् ।

---

## १२. न्याय्यात् पथः प्रविचलन्ति पदं न धीराः ।

हर्षतनूजो भीमसेनो युवराजपदारूढोऽतीवोद्दामवृत्तिरासीत् । स वयस्याधमैः संगमव्राजीत्ते च बहून्यपकृष्टानि बालिशचरितानि नृपतेरसदृशानि तमचीकरन् । अथैकदा तद्वयस्यानामेकतमो धर्माधिकारिणोऽग्रे दोषपरिच्छेदायोपानायि । स्थापितापराधस्य च तस्य कारावन्धनं धर्माधिकारिणाऽऽदेशि । तत्राधिकरणे सन्निहितो राजकुमारस्तच्छासनं यदाश्रौषीत्तदा नितान्तं समक्रुधत् । अत्युद्धतः स धर्माध्यक्षमभ्यधान्मित्रं मे विमोचय कारावन्धनाद् द्रुततरमिति । प्राह च कारा ह्यभूमी राजकुमारसखस्य । युवराजोऽस्म्यहम् । त्वामादिशामि जनममुं सामान्यं पाटच्चरमिव कारायां मा बन्धयेति । धर्माध्यक्षः प्रत्यवोचत् । अस्तु नाम भवान् राजपुत्रोऽधिराजपुत्रो वा । न युज्यते नृपतेर्धर्माध्यक्षमेवं वक्तुम् । कृतशपथोऽस्मि न्यायदर्शने न्यायमेव चानुवर्त इति । एतच्छ्रुत्वा नितरां संक्रुद्धो राजकुमारः स्वयं बन्दिं मोचयितुमयतत । न्यायाध्यक्षस्तु धीरस्तमादिशद्विरमेद्दशात् संरम्भादिहाधिकरण इति ।

Companion to Sanskrit Composition.

---

## १३. वायसोलूकयोः शाश्वतिकविरोधस्य बीजम् ।

एवं मन्त्रिवाक्यमाकर्ण्य मेघवर्ण आह । तात अथ किन्निमित्तं प्राणांतिकमेवंविधं सदैव वायसोलूकानां वैरम् । स आह । वत्स कदाचिद्धंसशुकबककोकिलचातकोलूकमयूरप्रभृतयः सर्वे पक्षिणः समेत्य सोद्वेगं मन्त्रयितुमारब्धाः । अहो अस्माकं वैनतेयो राजा । स च तावच्छ्रीवासुदेवासक्तो नास्माकं कामपि चिन्तां करोति । तत्किं तेन वृथास्वामिना यो लुब्धकपाशैर्नित्यं निबध्यमानानां नो न रक्षां विधत्ते । तत् संचिन्त्यान्यः कश्चिद्राजा विहंगमानां क्रियतामिति । अथ तैर्भद्राकारमुलूकमवलोक्य सर्वैरभिहितम् । यदेष उलूको राजास्माकं भविष्यति । तदानीयन्तां नृपाभिषेकसम्बन्धिनः सम्भारा इति । अथ साधिते विविधतीर्थोदके आपूरितेषु हेमकुम्भेषु दीपेषु वाद्येषु च सज्जीकृतेषु दर्पणादिषु मांगल्यवस्तुषु पठत्सु बन्दिमुख्येषु वेदोच्चारणपरेषु ब्राह्मणेषु गीतपरे युवतिजने आनीतायामग्रमहिष्यां कृकालिकायामुलूकोऽभिषेकार्थं यावत्सिंहासन उपविशति तावत्कुतोऽपि वायसः समायातः । सोऽचिन्तयत् । अहो किमेष पक्षिमेलापको महोत्सवश्च । अथ ते पक्षिणस्तं दृष्ट्वा मिथः प्रोचुः । पक्षिणां मध्ये वायसश्चतुरः श्रूयते तदस्यापि वचनं ग्राह्यम् । अथ वायसः समेत्य तानाह । अहो किं महाजनसमागमोऽयं परममहोत्सवश्च । ते प्रोचुः । भो नास्ति कश्चिद् विहंगमानां राजा । तदस्योलूकस्य विहंगराज्याभिषेको निरूपितस्तिष्ठति समस्तपक्षिभिः । तत्त्वमपि मतं देहि । प्रस्तावे समागतोऽसि । अथासौ काको विहस्याह । अहो न युक्तमेतद् यन्मयूरहंसकोकिलचक्रवाकशुकहारीतसारसादिषु पक्षिप्रधानेषु विद्यमानेषु दिवान्धस्यास्य करालवक्त्रस्याभिषेकः क्रियते । तन्नैतन्मम मतम् । एवं ज्ञात्वा यदुचितं तद्विधेयम् । अथ तस्य तद्वचनं श्रुत्वा साध्वनेनाभिहितमित्युक्त्वा भूयोऽपि पार्थिवार्थं समेत्य मन्त्रयिष्यामह इति ब्रुवाणाः सर्वे

यथाभिमतं जग्मुः । केवलमवशिष्टो भद्रासनोपविष्टोऽभिषेकार्थं दिवान्धः कृकालिकया सहास्ते । अथ तेनाभिहितम् । कः कोऽत्र भोः । किमद्यापि न क्रियते मेऽभिषेकः । अथ कृकालिकयाभिहितम्। भद्र कृतोऽयं विघ्नस्ते काकेन । गतास्ते विहगा यथेप्सितासु दिक्षु । केवलमेक एवायं वायसः केनापि हेतुना तिष्ठति । तदुत्तिष्ठ येन त्वां स्वाश्रयं प्रापयिष्यामि । तच्छ्रुत्वा स सविषादं वायसमाह । भो दुष्टात्मन् किं मया तेऽपकृतं यद्राज्याभिषेको मे विघ्नितः । तदद्यप्रभृति सान्वयमावयोर्वैरम् । इत्येवमभिधाय कृकालिकया सह स्वाश्रयं गतः । अथ भयव्याकुलो वायसो व्यचिन्तयत् । अहो अकारणवैरमासादयता मया किं व्याहृतम् । एवमुक्त्वा काकोऽपि स्वभवनं प्रायात् । तद्भूत्स एवमस्माभिः सह वैरी कौशिकानामन्वयागतम् ।

पञ्चतंत्रम्— ।

---

## १४. आत्मवंचितस्य कच्छपस्य ।

कस्मिंश्चित्सरसि गूढग्रीवो नाम कच्छपो वसति स्म । तस्य द्वौ गृध्रौ जीवितनिर्विशेषौ सुहृदावास्ताम् । तौ प्रत्यहं सरस्तीरमागत्य तेन सह पुण्याभिः कथाभिः सुखेन कालं नीत्वास्तमनकाले स्वनीडसंश्रयमकुरुताम् । गूढग्रीवोऽपि तेन साधुसमागमेन शास्त्रनिपुणो बहुश्रुतश्च संजातः । परं जातिस्वभावान्नित्यमधीरप्रकृतिरेवासीत् । अथ गच्छता कालेनानावृष्टिवशात् तत्सरः शनैः शनैः शोषमयात् । मृताश्च नानाविधा जलजन्तवः । गूढग्रीवस्तु कथमप्यायुःशेषतया सरस एकदेशे कष्टेन प्राणान् धारयति स्म ।

ततस्तद्दुःखदुःखितौ गृध्रौ तमाहतुः । सखे जम्बालशेषमेतत्सरः संवृत्तम् । तत्कथं भवतात्र जीवितुं शक्यमिति चिन्ताकुलमावयोर्हृदयम् । असह्यश्च पुनस्त्वत्सदर्शेन चिरसुहृदा वियोगो भवेत् । तदेवंगते किं

कुर्वः । तत्तयोर्वचनं श्रुत्वा गूढग्रीवोऽपि विषण्णमनाः साश्रुमुखस्ता-नाह । भो न मेऽधुनाशा जीवितं प्रति । सर्वथा मंदभाग्योऽस्मि । तन्न भवद्भ्यां मद्धेतोर्विषादः कार्यः । न च स्वजीविते विरागः कर्तव्यः । केवलं स्मर्तव्योऽहं प्रियजनकथासु ।

तत्तस्य वचः श्रुत्वा तयोरेकतरः प्राह । वयस्य न त्वं धैर्यं त्यक्तु-मर्हसि । विचिन्त्यतां कोऽपि जीवितरक्षणोपायो येनैतामपि महापदं तरासि । गूढग्रीव आह । सत्यमुदितं वयस्येन । परमस्मिन्महासंकटे न मे बुद्धिः प्रभवति । किं करोमि । सर्वथा विवशोऽस्मि संजातः । तद्यदि भवद्भ्यां कश्चिदुपायो दृष्टो भवेद्रक्ष्यन्तामेते ममाल्पभाग्यस्य प्राणाः ।

ततोऽन्यतरेणोक्तम् । अस्ति तावदेक एवोपायः । इतो नातिदूरे प्रभूतजलं नीलोदं नाम सरो विद्यते तत्र त्वां नयावः । इदमत्र लघु काष्ठं तिष्ठति । एतत्त्वया मध्यदेशे दन्तैः सुदृढमालम्ब्यताम् । आवां चैनत्कोटिभागयोर्गृहीत्वा त्वत्सहितमुद्धृत्य तत्सरो नयावः । परं त्वया मौनव्रतेन भवितव्यम् । नो चेत्काष्ठात्पतितः पञ्चत्वं गच्छेः । गूढग्रीव आह । एवं करोमि । न पुनर्मार्गे किमपि वचनप्रयोजनं स्यात् । बल-वती च जीविताशा यया ग्रीवादिबन्धनमपि सह्यं भवेत् ।

अथ ते तथोच्चैरम्बरवर्त्मना गच्छन्तः कस्यचिन्महापुरस्योपरि प्राप्ताः। तत्र ये पौरास्तै तं कच्छपं तथा गृध्राभ्यां नीयमानमालोक्य सविस्मय-मब्रुवन् । अहो चक्राकारं किमपि पक्षिभ्यां नीयते पश्यत पश्यतेति । एवं तेषां मिथः संवदतां महान्कोलाहलः संजातः । गूढग्रीवस्तूर्ध्वदृष्टिस्तान् विस्मयाकुलान् पौराननीक्षमाणः केवलं तं कोलाहलमशृणोत् । सह-सैव चोपजातकुतूहलो विस्मृतमित्रवचनो गूढग्रीवो भोः किमेष कोलाहल इत्यर्धोक्ते काष्ठाद्भ्रष्टो वेगेन भूमौ निपतितः पौरैर्ल-गुडहस्तैर्व्यापादित ।

## १५. त्रिभिर्धूर्तैर्वञ्चितस्य ब्राह्मणस्य ।

अस्ति कस्मिंश्चिदधिष्ठाने मित्रशर्मा नाम ब्राह्मणः कृताग्निहोत्रपरिग्रहः प्रतिवसति स्म । स कदाचिन्माघमासेऽसौम्यानिले प्रवाति मेघाच्छादिते गगने मन्दं मन्दं वर्षति पर्जन्ये पशुप्रार्थनार्थं किञ्चिद् ग्रामान्तरं गतः । तत्र तेन कश्चिद्यजमानो याचितः—भो यजमान, आगामिन्याममावास्यायां यक्ष्यामि यज्ञम् । तद्यजनार्थे पशुमेकं समर्पयेति । अथ तेनातीव पीवरतनुः पशुः प्रदत्तः। सोऽपि समर्थं तं पशुमितश्चेतश्च गच्छन्तं विज्ञाय स्कन्धे कृत्वा सत्वरं पुराभिमुखं प्रतस्थे । अथ तस्य गच्छतो मार्गे त्रयो धूर्ताः क्षुत्क्षामकण्ठाः सम्मुखा बभूवुः । तैस्तादृशं पीवरतनुं पशुं स्कन्धे कृतमालोक्य मिथोऽभिहितम्—भोः, अस्य पशोर्भक्षणादद्यतनीयो हिमपातो व्यर्थतां नीयते । तदेनं वंचयित्वास्य सकाशाद् गृह्यते । अथ तेषामेकतमो वेषपरिवर्तनं विधाय सम्मुखो भूत्वापरमार्गेण तमाहिताग्निमूचे । भो भो बालाग्निहोत्रिन् किमेवं जनविरुद्धं हास्यकार्यमनुष्ठीयते यदेष सारमेयोऽपवित्रः स्कन्धाधिरूढो नीयते । ततश्च तेन कोपाविष्टेनाभिहितम् । अहो किमन्धो भवान् यत्पशुं सारमेयत्वेन प्रतिपादयति। स आह—ब्रह्मन् न कोपः कार्यः। यथेच्छं गम्यताम्। अथ यावत् किञ्चिद् वनान्तरं गच्छति तावद् द्वितीयो धूर्तः सम्मुखमुपेत्य तमुवाच—भो ब्रह्मन् कष्टं कष्टम् । यद्यपि वल्लभोऽयं मृतवत्सस्तथापि स्कन्धमारोपयितुमयुक्तः । अथासौ सकोपमाह—भोः किमन्धो भवान् पशुं मृतवत्सं वदसि । सोऽब्रवीत्—भगवन् मा कोपं कुरु । अज्ञानान्मयाभिहितम् । तत्त्वमात्मन उचितेन समाचरेति । अथ यावत् स्तोकं वनान्तरं गच्छति तावत् तृतीयो धूर्तः सम्मुखमुपेत्य तमुवाच भोः । अयुक्तमेतद्यद्रासभं स्कन्धारूढं नयसि । तत् त्यज्यतामेष यावत् कोऽपि न पश्यति । अथासौ तं पशुं राक्षसं मन्यमानो भयाद् भूमौ

प्रक्षिप्य स्वगृहमुद्दिश्य पलायितुं प्रारब्धः । ततस्तेऽपि त्रयो मिलित्वा पशुमादाय यथेच्छं भक्षयितुमारब्धाः ।

पञ्चतन्त्रम् ।

---

## १६. तेजस्विप्रशंसा ।

प्रिया न्याय्या वृत्तिर्मलिनमसुभङ्गेऽप्यसुकरं
त्वसन्तो नाभ्यर्थ्याः सुहृदपि न याच्यः कृशधनः ।
विपद्युच्चैः स्थेयं पदमनुविधेयं च महताम्
सतां केनोद्दिष्टं विषममसिधाराव्रतमिदम् ॥ १

क्षुत्क्षामोऽपि जराकृशोऽपि शिथिलप्रायोऽपि कष्टां दशा-
मापन्नोऽपि विपन्नदीधितिरपि प्राणेषु नश्यत्स्वपि ।
मत्तेभेन्द्रविभिन्नकुम्भकवलग्रासैकबद्धस्पृहः
किं जीर्णं तृणमत्ति मानमहतामग्रेसरः केसरी ॥ २

स्वल्पस्नायुवसावशेषमलिनं निर्मांसमप्यस्थिकं
श्वा लब्ध्वा परितोषमेति न तु तत्तस्य क्षुधाशान्तये ।
सिंहो जम्बुकमङ्कमागतमपि त्यक्त्वा निहन्ति द्विपं
सर्वः कृच्छ्रगतोऽपि वाञ्छति जनः सत्त्वानुरूपं फलम् ॥ ३

लाङ्गूलचालनमधश्चरणावपातं, भूमौ निपत्य वदनोदरदर्शनं च ।
श्वा पिण्डदस्य कुरुते गजपुङ्गवस्तु, धीरं विलोकयति चाटुशतैश्च भुङ्क्ते ॥ ४

सन्त्यन्येऽपि बृहस्पतिप्रभृतयः सम्भाविताः पञ्चषा-
स्तान् प्रत्येष विशेषविक्रमरुची राहुर्न वैरायते ।
द्वावेव ग्रसते दिनेश्वरनिशाप्राणेश्वरौ भासुरौ
भ्रातः पर्वणि पश्य दानवपतिः शीर्षावशेषीकृतः ॥ ५

वहति भुवनश्रेणीं शेषः फणाफलकस्थितां
कमठपतिना मध्येपृष्ठं सदा स विधार्यते ।
तमपि कुरुते क्रोडाधीनं पयोधिरनादरा-
दहह महतां निःसीमानश्चरित्रविभूतयः ॥ ६

भर्तृहरिकृतं नीतिशतकम् ।

---

## १७. जनमेजयपृष्टो वैशंपायनो यादवसंहारवृत्तान्तं कथयति ।

केनानुशप्ता यादवा अन्योन्यं निहत्य व्यनशन्निति जनमेजयो वैशंपायनमप्राक्षीत् । स चैवमवादीत् । युधिष्ठिरस्य शासतः षड्विंशे वर्षे कण्वनारदविश्वामित्रास्त्रयो मुनयः कृष्णदिदृक्षया द्वारकामव्राजिषुः । यादवास्तान् रथ्यासु परिभ्रमतो दृष्ट्वा तदुपहासकृतमतयः कंचिद्युवानं स्त्रीमिव भूषयित्वा समीपमानैषुराभाषिषत च । इयं स्त्री पुत्रकामस्य बभ्रोरमिततेजसः । ऋषयः साधु जानीत किमियं जनयिष्यतीति । तद्विप्रलम्भधर्षितास्ते मुनयः परं क्रोधमभाक्षुरशाप्सुश्च यादवकुलविनाशकरं घोरं मुशलमस्य यूनो जायेतेति । अथ निवृत्ते मुनिजने कतिपयैरहोभिः कृष्णपुरोगमा यादवास्तीर्थयात्रायै प्रास्थिषत । प्रभासमेत्य च तत्रैव ते न्यवात्सुः । तेषां पानमदाविष्टानां महान् कलहः समजनि । अन्योन्यजिघांसया यद्यदायुधं तेऽग्रहीषुस्तत्तन्मुशलभावं प्रत्यपादि । तैर्मुशलैस्ते परस्परं प्रामाथिषुः प्रमत्ता इव स्नेहं दयां बन्धुतां वा न किलाबोधिषत । अवधीत्पितरं पुत्रः पिता पुत्रमघातयत् । पतङ्गानिव वह्निस्तानग्रसीदन्तकस्तदा । पतिविनाकृतानां युवतीनामाक्रोशं महान्तं कृष्णो यदाश्रौषीत्तदा विषण्णमना दारुकमादिक्षत् । भद्र कुरून् गत्वा सर्वमिमं वृत्तान्तं पाण्डवेभ्यो निवेदय क्षिप्रं चार्जुनमानयेति । पुनः

प्रभासं प्रतिनिवृत्य स बलरामं दिवं गतमद्राक्षीत् । आत्मनोऽपि संक्रमणकालोऽयमित्यवधार्य योगमास्थायेन्द्रियाणि न्यरौत्सीत् । यदृच्छया च लुब्धकशरविद्धः प्राणान् व्यस्राक्षीत् ।

Third Sanskrit Course.

---

## १८. भागीरथीस्तवनम् ।

समृद्धं सौभाग्यं सकलवसुधायाः किमपि त-
न्महैश्वर्यं लीलाजनितजगतः खंडपरशोः ।
श्रुतीनां सर्वस्वं सुकृतमथ मूर्तं सुमनसां
सुधासोदर्यं ते सलिलमशिवं नः शमयतु ॥ १

दरिद्राणां दैन्यं दुरितमथ दुर्वासनहृदां
द्रुतं दूरीकुर्वन् सकृदुपगतो दृष्टिसरणिम् ।
अपि द्रागाविद्याद्रुमदलनदीक्षागुरुरिह
प्रवाहस्ते वारां श्रियमयमपारां दिशतु नः ॥ २

तवालंबादंब स्फुरदलघुगर्वेण सहसा
मया सर्वेऽवज्ञासरणिमथ नीताः सुरगणाः ।
इदानीमौदास्यं यदि भजसि भागीरथि तदा
निराधारो हा रोदिमि कथय केषामिह पुरः । ३

अपि प्राज्यं राज्यं तृणमिव परित्यिज्य सहसा
विलोलद्वानीरं तव जननि तीरं श्रितवताम् ।
सुधातः स्वादीयः सलिलमिदमातृप्ति पिबतां
जनानामानंदः परिहसति निर्वाणपदवीम् ॥ ४

स्मृतं सद्यः स्वांतं विरचयति शांतं सकृदपि
प्रगीतं यत्पापं झटिति भवतापं च हरति ।

इदं तद्गंगेति श्रवणरमणीयं खलु पदं
मम प्राणप्रांते वदनकमलांतर्विलसतु ॥ ५
स्खलंती स्वर्लोकादवनितलशोकापहृतये
जटाजूटग्रंथौ यदसि विनिबद्धा पुरभिदा ।
अये निर्लोभानामपि मनसि लोभं जनयतां
गुणानामेवायं तव जननि दोषः परिणतः ॥ ६
जडानन्धान्पंगून्प्रकृतिबधिरानुक्तिविकलान्
ग्रहग्रस्तानस्ताखिलदुरितनिस्तारसरणीन् ।
निलिंपैर्निर्मुक्तानपि च निरयांतर्निपतितान्
नरानम्ब त्रातुं त्वमिह परमं भेषजमसि ॥ ७
कृतक्षुद्रैनस्कानथ झटिति संतप्तमनसः
समुद्धर्तुं संति त्रिभुवनतले तीर्थनिवहाः ।
अपि प्रायश्चित्तप्रसरणपथातीतचरिता—
न्नरानूरीकर्तुं त्वमिव जननि त्वं विजयसे ॥ ८
निधानं धर्माणां किमपि च विधानं नवमुदां
प्रधानं तीर्थानाममलपरिधानं त्रिजगतः ।
समाधानं बुद्धेरथ खलु तिरोधानमधियां
श्रियामाधानं नः परिहरतु तापं तव वपुः ॥ ९
विधत्तां निःशंकं निरवधिसमाधिं विधिरहो
सुखं शेषे शेतां हरिरविरतं नृत्यतु हरः ।
कृतं प्रायश्चित्तैरलमथ तपोदानयजनैः
सवित्री कामानां यदि जगति जागर्ति भवती ॥ १०
विलीनोऽयं वैवस्वतनगरकोलाहलभरो
गता दूता दूरं क्वचिदपि परेतान्मृगयितुम् ।

विमानानां व्रातो विदलयति वीथीर्दिविषदां
कथा ते कल्याणी यदवधि महीमंडलमगात् ॥ ११
त्रपंते तीर्थानि त्वरितमिह यस्योद्धृतिविधौ
करं कर्णे कुर्वंत्यपि किल कपालिप्रभृतयः ।
इमं तं मामंब त्वमियमनुकंपार्द्रहृदये
पुनाना सर्वेषामघशमनदर्पं दलयसि ॥ १२
विशालाभ्यामाभ्यां किमिह नयनाभ्यां खलु फलं
न याभ्यामालीढा परमरमणीया तव तनुः ।
अयं हि न्यक्कारो जननि मनुजस्य श्रवणयो- ।
र्ययोर्नांतर्यातस्तव लहरिलीलाकलकलः ॥ १३
यजंत्येके देवान्कठिनतरसेवांस्तदपरे ।
वितानव्यासक्ता यमनियमरक्ताः कतिपये ।
अहं तु त्वन्नामस्मरणकृतकामास्त्रिपथगे
जगज्जालं जाने जननि तृणजालेन सदृशम् ॥ १४
विभूषितानंगरिपूत्तमांगा सद्यः कृतानेकजनार्तिभंगा ।
मनोहरोत्तुंगचलत्तरंगा गंगा ममांगान्यमलीकरोतु ॥ १५

गंगालहरी ।

---

## १९. सुहृद्भावः ।

( प्रथमः परिच्छेदः )

अथ चित्राङ्गो नाम हरिणो लुब्धकत्रासितस्तस्मिन्नेव सरसि प्राविष्टः । अथायान्तं तं ससम्भ्रममवलोक्य लघुपतनको वृक्षमारूढः । हिरण्यकः शरस्तम्बं प्रविष्टः । मन्थरकः सलिलाशयमास्थितः । अथ लघुपतनको मृगं सम्यक् परिज्ञाय मन्थरकमुवाच । एह्येहि सखे मन्थरक

मृगोऽयं तृषार्तोऽत्र समायातः सरसि प्रविष्टः। तस्य शब्दोऽयं न मानुषसंभव इति। तच्छ्रुत्वा मन्थरको देशकालोचितमाह। भो लघुपतनक यथायं मृगो प्रभूतमुच्छ्वासमुद्वहन्नुद्भ्रान्तदृष्ट्या पृष्ठतोऽवलोकयति तन्न तृषार्तः। एष नूनं लुब्धकत्रासितः। तज्ज्ञायतामस्य पृष्ठं लुब्धका आगच्छंति न वेति। तच्छ्रुत्वा चित्राङ्ग आह। भो मन्थरक ज्ञातं त्वया सम्यङ् मे त्रासकारणम्। अहं लुब्धकशरप्रहारादुद्धारितः कृच्छ्रेणात्र समायातः। मम यूथं तैर्लुब्धकैर्व्यापादितं भविष्यति। तच्छरणागतस्य मे दर्शय किञ्चिदगम्यं स्थानं लुब्धकानाम्। तदाकर्ण्य मन्थरक आह। भोश्चित्राङ्ग श्रूयतां नीतिशास्त्रम्। शत्रुदर्शने विमुक्तौ द्वावुपायाविह प्रोक्तौ। एको हस्तयोश्चालनाद् द्वितीयः पादवेगजः। तद्गम्यतां शीघ्रं वनं घनं यावन्नागच्छन्ति ते दुरात्मानो लुब्धकाः। अत्रान्तरे लघुपतनकः सत्वरमभ्युपेत्योवाच। भो मन्थरक गतास्ते लुब्धकाः स्वगृहोन्मुखाः प्रचुरमांसपिण्डधारिणः। तच्चित्राङ्ग त्वं विश्रब्धो जलाद्बहिर्भव। ततस्ते चत्वारोऽपि मित्रभावमाश्रितास्तस्मिन् सरसि मध्याह्नसमये वृक्षच्छायायां सुभाषितगोष्ठीसुखमनुभवन्तः सुखेन कालं नयन्ति।

( द्वितीयः परिच्छेदः )

अथैकस्मिन्नहनि गोष्ठीसमये मृगो नायातः। अथ ते व्याकुलीभूताः परस्परं जल्पितुमारब्धाः। अहो किमद्य सुहृन्न समायातः। किं सिंहादिभिः क्वचित् व्यापादित उत लुब्धकैरथवानले प्रपतितो गर्ताविषमे वा नवतृणलौल्यादिति। अथ मन्थरको वायसमाह। भो लघुपतनक अहं हिरण्यकश्च तावद् द्वावप्यशक्तौ तस्यान्वेषणं कर्तुं मन्दगतित्वात्। तद्गत्वा त्वमरण्यं शोधय यदि कुत्रचित्तं जीवन्तं पश्यसीति। तदाकर्ण्य लघुपतनको नातिदूरे यावद्गच्छति तावत्पल्वलतीरे चित्राङ्गः कूटपाशनियन्त्रितस्तिष्ठति। तं दृष्ट्वा शोकव्याकुलितमनास्तमवोचत्।

भद्र किमिदम् । चित्राङ्गोऽपि वायसमवलोक्य विशेषेण दुःखितमना बभूव । ततश्च बाष्पावसाने चित्राङ्गो लघुपतनकमाह । भो मित्र संजातोऽयं तावन्मम मृत्युः । तद्युक्तं संपन्नं यद्भवता सह दर्शनं संजातम् । तत्क्षन्तव्यं यन्मया प्रणयात् सुभाषितगोष्ठीष्वभिहितम् । तथा हिरण्यकमन्थरकौ मम वचनाद्वाच्यौ

अज्ञानाज्ज्ञानतो वापि दुरुक्तं यदुदाहृतम् ।
मया तत्क्षम्यतामद्य द्वाभ्यामपि प्रसादतः ॥

तच्छ्रुत्वा लघुपतनक आह । भद्र न भेतव्यमस्मद्विधैर्मित्रैर्विद्यमानैः। यावदहं हिरण्यकं द्रुततरं गृहीत्वागच्छामि । अपरं ये सत्पुरुषा भवन्ति ते व्यसने न व्याकुलत्वमुपयान्ति । उक्तं च ।

सम्पदि यस्य न हर्षो विपदि विषादो रणे न भीरुत्वम् ।
तं भुवनत्रयतिलकं जनयति जननी सतं विरलम् ॥

एवमुक्त्वा लघुपतनकश्चित्राङ्गमाश्वास्य यत्र हिरण्यकमन्थरकौ तिष्ठतस्तत्र गत्वा सर्वं चित्राङ्गपाशपतनं कथितवान्। हिरण्यकं च चित्राङ्गपाशमोक्षणं प्रति कृतनिश्चयं पृष्ठमारोप्य भूयोऽपि सत्वरं चित्राङ्गसमीपे गतः । सोऽपि मूषकमवलोक्य किञ्चिज्जीविताशया संश्लिष्ट आह ।

आपन्नाशाय विबुधैः कर्तव्याः सुहृदोऽमलाः ।
न तरत्यापदं कश्चिद्योऽत्र मित्रविवर्जितः ॥

हिरण्यक आह । भद्र त्वं तावन्नीतिशास्त्रज्ञो दक्ष इति । तत्कथमत्र कूटपाशे पतितः । स आह । भो न कालोऽयं विवादस्य । तन्न यावत्स पापात्मा लुब्धकः समभ्येति तावद् द्रुततरं कर्तयेमं मत्पादपाशम् । तदाकर्ण्य विहस्याह हिरण्यकः । किं मय्यपि समायाते लुब्धकाद्बिभेषि । ततः शास्त्रं प्रति महती मे विरक्तिः सम्पन्ना यद्भवद्विधा अपि नीतिशास्त्रविद एतामवस्थां प्राप्नुवन्ति । तेन त्वां पृच्छामि । स आह । भद्र कर्मणा बुद्धिरपि हन्यते । उक्तं च ।

कृतान्तपाशबद्धानां दैवोपहतचेतसाम् ।
बुद्धयः कुब्जगामिन्यो भवन्ति महतामपि ॥

( तृतीयः परिच्छेदः )

एवं तयोः प्रवदतोः सुहृद्व्यसनसन्तप्तहृदयो मन्थरकः शनैः शनैस्तं प्रदेशमाजगाम । तं दृष्ट्वा लघुपतनको हिरण्यकमाह । अहो न शोभनमापतितम् । हिरण्यक आह । किं स लुब्धकः समायाति । स आह । आस्तां तावल्लुब्धकवार्ता । एष मन्थरकः समागच्छति । तदनीतिरनुष्ठितानेन यतो वयमप्यस्य कारणान्नूनं व्यापादनं यास्यामः । यदि स पापात्मा लुब्धकः समागमिष्यति तदहं तावत् खमुत्पतिष्यामि । त्वं पुनर्बिलं प्रविश्यात्मानं रक्षयिष्यसि । चित्राङ्गोऽपि वेगेन दिगन्तरं यास्यति । एष पुनर्जलचरः स्थले कथं भविष्यतीति व्याकुलोऽस्मि । अत्रान्तरे प्राप्तोऽयं मन्थरकः । हिरण्यक आह । भद्र न युक्तमनुष्ठितं भवता यदत्र समायातः । तद् भूयोऽपि द्रुततरं गम्यतां यावदसौ लुब्धको न समायाति । मन्थरक आह । भद्र किं करोमि । न शक्नोमि तत्रस्थो मित्रव्यसनाग्निदाहं सोढुम् । तेनाहमत्रागतः । एवं तस्य प्रवदत आकर्णपूरितशरासनो लुब्धकोऽप्युपागतः । तं दृष्ट्वा मूषकेण तस्य स्नायुपाशस्तत्क्षणात् खण्डितः । अत्रान्तरे चित्राङ्गः सत्वरं पृष्ठमवलोकयन् प्रधावितः । लघुपतनको वृक्षारूढः । हिरण्यकश्च समीपवर्ति बिलं प्रविष्टः । अथासौ लुब्धको मृगगमनाद्विषण्णवदनो व्यर्थश्रमस्तं मन्थरकं मन्दं मन्दं स्थलमध्ये गच्छन्तं दृष्टवान् । अचिन्तयच्च । यद्यपि कुरङ्गो धात्रापहृतस्तथाप्ययं कूर्म आहारार्थं सम्पादितः । तदद्यास्यामिषेण मे कुटुम्बस्याहारनिर्वृत्तिर्भविष्यति । एवं विचिन्त्य तं दर्भैः संच्छाद्य धनुषि समारोप्य स्कन्धे कृत्वा गृहं प्रति प्रस्थितः । अत्रान्तरे तं नीयमानमवलोक्य हिरण्यको दुःखाकुलः पर्यदेवयत् । कष्टं भोः कष्टमापतितम् ।

एकस्य दुःखस्य न यावदन्तं गच्छाम्यहं पारमिवार्णवस्य ।
तावद् द्वितीयं समुपस्थितं मे छिद्रेष्वनर्था बहुलीभवन्ति ॥

यदि तावत्कृतान्तेन मे धननाशो विहितस्तन्मार्गश्रान्तस्य मे विश्रामभूतं मित्रं कस्मादपहृतम् । अपरमपि मित्रं परं मन्थरकसमं न स्यात् । अस्य पश्चान्नान्यः सुहृन्मे । तत् किं ममोपर्यनवरतं व्यसनशतैर्वर्षति हन्त विधिः । यत आदौ तावद्वित्तनाशस्ततः परिवारभ्रंशस्ततो देशत्यागस्ततो मित्रवियोग इति । अथवा स्वरूपमेतत् सर्वेषां जन्तूनां जीवितधर्मस्य । अत्रान्तर आक्रन्दपरौ चित्राङ्गलघुपतनकौ तत्रैव समायातौ । अथ हिरण्यक आह । अहो किं वृथाप्रलपितेन । तद्यावदेष मन्थरको दृष्टिगोचरान्न नीयते तावदस्य मोक्षोपायश्चिन्त्यतामिति । तच्छ्रुत्वा वायस आह । भो यद्येवं तत्क्रियतां मद्वचः । एष चित्राङ्गोऽस्य मार्गे गत्वा किञ्चित्पल्वलमासाद्य तस्त तीरे निश्चेतनो भूत्वा पततु । अहमप्यस्य शिरसि समारुह्य मन्दैश्चंचुप्रहारैः शिर उल्लेखयिष्यामि येनासौ लुब्धकोऽमुं मृतं मत्वा मम चंचुप्रहारप्रत्ययेन मन्थरकं भूमौ क्षिप्त्वा मृगार्थे धावति । अत्रान्तरे त्वया दर्भमयबन्धनवेष्टनानि खण्डनीयानि येनासौ मन्थरको द्रुततरं पल्वलं प्रविशति । चित्राङ्गः प्राह । भो भद्रोऽयं दृष्टो मन्त्रस्त्वया । नूनं मन्थरको मुक्तो मन्तव्यः । तदेवं क्रियताम् । तथानुष्ठिते स लुब्धकस्तथैव मार्गासन्नपल्वलतीरस्थं चित्राङ्गं वायससनाथमद्राक्षीत् । तं दृष्ट्वा हर्षितमना व्यचिन्तयत् । नूनं पाशवेदनया वराकोऽयं मृगो गत्वाऽऽयुःशेषजीवितः पाशं त्रोटयित्वा कथमप्येतद्वनान्तरं प्रविष्टो यावन्मृतः । तद्वश्योऽयं मे कच्छपः सुयन्त्रितत्वात् । तदेनमपि गृह्णामीत्यवधार्य कच्छपं भूतले प्रक्षिप्य मृगमुपाद्रवत् । अत्रान्तरे हिरण्यकेन वज्रोपमदंष्ट्राप्रहारेण तद्दर्भवेष्टनं तत्क्षणात् खण्डशः कृतम् । मन्थरकोऽपि तृणमध्यान्निष्क्रम्य पल्वलं प्रविष्टः । चित्राङ्गोऽप्यप्राप्तस्यापि तस्योत्थाय वायसेन सह द्रुतं

प्रनष्टः। अत्रान्तरे विलक्षो विषादपरो निवृत्तो लुब्धको यावत्पश्यति तावत् कच्छपोऽपि गतः। ततश्च तत्रोपविश्येमं श्लोकमपठत्—

प्राप्तो बन्धनमप्ययं गुरुमृगस्तावत्त्वया मे हृतः
संप्राप्तः कमठः स चापि नियतं नष्टस्तवादेशतः।
क्षुत्क्षात्मोऽत्र वने भ्रमामि शिशुकैस्त्यक्तः समं भार्यया
यत्स्वामिन् न कृतं कृतान्त कुरु रे तत्रापि सज्जोऽस्म्यहम्॥

एवं बहुविधं विलप्य स्वगृहं गतः। अथ तस्मिन् दूरीभूते सर्वेऽपि ते काककूर्ममृगाखवः परमानन्दभाजो मिलित्वा परस्परमालिङ्ग्य पुनर्जातमिवात्मानं मन्यमानास्तत्रैव सरसि महासुखेन सुभाषितगोष्ठीविनोदं कुर्वन्तः कालं नयन्ति स्म।

पंचतंत्रम्—२.

---

## २०. स्वभावो दुरतिक्रमः।

पुरा किल कस्यचिन्मुनेर्गङ्गायास्तीरे सवितारमुपतिष्ठमानस्याञ्जलौ श्येनस्य मुखात्परिभ्रष्टा काचिन्मूषिका पतिता। कृपालुत्वाच्चासौ तां कमण्डलौ निधायाश्रमं प्रति नीतवान्। मुनेस्तपसः प्रभावेण सा मानुषं रूपमलभत। अथ गच्छता कालेन सा यौवनं प्राप्ता। ततः कस्मैचिद्बलवते तां दातुमिच्छन्मुनिः सूर्यं मेघमनिलं च समाह्वयत्। आह च। भद्रे सर्वेऽप्येते बलिष्ठास्तदेतेषामन्यतमं पतिं वरयितुमर्हसीति। तदा सूर्योऽवदत्। मुने प्रकृत्या दाहकतमोऽहम्। अत इयं ते कन्या मेघं वरयतु। मेघः खलु मत्तोऽपि बलीयान् यतोऽयमुच्चस्तम आकाशे चरन्तमपि मां क्षणेन सर्वतः स्थगयतीति। मेघस्तामाह। बालेऽहं जलमयः प्रकृत्या शीततमः। वायुस्तु मत्तोऽपि शक्तिमत्तरो य एष नित्यं मामवशं दिक्षु विक्षिपतीति। ततो वायुराह।

यत्प्रकृत्या चञ्चलोऽहमद्रयस्तु मत्तोऽपि गरीयांसस्तत्तेषामेकतमं वरयतु भवती। ततः कन्याया अपि तादृशमेवाभिप्रायं विदित्वा हिमवन्तं नगाधिराजं मुनिराह्वयत्। हिमवानप्यात्मनोऽचलत्वं स्थविष्ठत्वं च निन्दन्नेवमाह। बाले मत्तो मूषकाः श्रेष्ठतरा यतस्ते निशिततमैर्दन्तैर्नित्यमेव ममाङ्गानि निकृन्तन्ति छिद्रितश्च तैरहं सर्वत इति। अथ तस्य तेन वचनेनातितरां हृष्टा मानुषीभावं विस्मृता सा पितरमाह। भगवन्नस्तु मे मूषक एव पतिर्नाहमन्यं कमपि वरयेयामिति। मुनिस्तु तस्यास्तेनासाधुना निर्बन्धेन क्रुद्धः क्षणेन तां मूषिकां कृत्वा दवीयसि बिले व्यसृजत्।

Second Sanskrit Course.

---

## २१. आत्रेयीवनदेवतयोः सीतारामविषयकः सँल्लापः।

**आत्रेयी**–विश्रान्तास्मि भद्रे। सम्प्रत्यगस्त्याश्रमस्य पन्थानं ब्रूहि।

**वनदेवता**–इतः पंचवटीमनुप्रविश्य गम्यतामनेन गोदावरीतीरेण।

**आत्रेयी**–( सबाष्पा ) अप्येतत्तपोवनम्। अप्येषा पंचवटी। अपि सरिदियं गोदावरी। अप्ययं गिरिः प्रस्रवणः। अपि वनदेवता जनस्थानवासिनी वासंती त्वम्।

**वासंती**–अस्त्येतत्सर्वम्।

**आत्रेयी**–वत्से जानकि,

स एष ते वल्लभबंधुवर्गः प्रासंगिकीनां विषयः कथानाम्।
त्वां नामशेषामपि दृश्यमानः प्रत्यक्षदृश्यामिव नः करोति ॥१॥

**वासंती**–( सभयं स्वगतम् ) कथं नामशेषामित्याह। ( प्रकाशम् ) आर्ये किमत्याहितं सीतादेव्याः।

**आत्रेयी**–न केवलमत्याहितं, सापवादमपि।

**वासंती**—कथमिव ।

**आत्रेयी**—( कर्णे ) एवमेवम् ।

**वासंती**—अहह ! दारुणो दैवनिर्घातः । ( इति मूर्च्छति )

**आत्रेयी**—भद्रे समाश्वसिहि ।

**वासंती**—हा प्रियसखि हा महाभागे ईदृशस्ते निर्माणभागः । रामभद्र रामभद्र । अथवा अलं त्वया । आर्ये आत्रेयि । अथ तस्मादरण्यात्परित्यज्य निवृत्ते लक्ष्मणे सीतादेव्याः किं वृत्तमिति काचिदस्ति प्रवृत्तिः ।

**आत्रेयी**—नहि नहि ।

**वासंती**—हा कष्टमार्यारुंधतीवशिष्ठाधिष्ठिते रघुकुलगृहे जीवंतीषु च प्रवृद्धराज्ञीषु कथमिदं जातम् ।

**आत्रेयी**—ऋष्यशृंगसत्रे गुरुजनस्तदाऽऽसीत् । संप्रति परिसमाप्तं तद् द्वादशवार्षिकं सत्रम् । ऋष्यशृंगेण च संपूज्य विसर्जिता गुरवः । ततो भगवत्यरुंधती नाहं वधूविरहितामयोध्यां गमिष्यामीत्याह । तदेव राममातृभिरनुमोदितम् । तदनुरोधाद्भगवतो वशिष्ठस्य परिशुद्धा वाचो यथा वाल्मीकितपोवनं गत्वा तत्र वत्स्याम इति ।

**वासंती**—अथ स राजा किमारंभः संप्रति ।

**आत्रेयी**—तेन राज्ञा ऋतुरश्वमेधः प्रक्रांतः ।

**वासंती**—अहह धिक् ! परिणीतमपि ! ।

**आत्रेयी**—शांतं पापम् ।

**वासंती**—का तर्हि यज्ञे सहधर्मचारिणी ।

**आत्रेयी**—हिरण्मयी सीताप्रतिकृतिः ।

**वासंती**—हंत भोः,

वज्रादपि कठोराणि मृदूनि कुसुमादपि ।
लोकोत्तराणां चेतांसि को हि विज्ञातुमर्हति ॥ २ ॥

**आत्रेयी**—विसृष्टश्च वामदेवानुमंत्रितो मेध्योऽश्वः । उपकल्पिताश्च यथाशास्त्रं तस्य रक्षितारः । तेषामधिष्ठाता च लक्ष्मणात्मजश्चंद्रकेतुर्दत्तदिव्यास्त्रसंप्रदायश्चतुरंगसाधनान्वितोऽनुप्रहितः ।

**वासंती**—( सस्नेहकौतुकास्रम् ) । कुमारलक्ष्मणस्यापि पुत्रः । हंत मातर्जीवामि ।

**आत्रेयी**—अत्रांतरे ब्राह्मणेन मृतं पुत्रमुत्क्षिप्य राजद्वारे सोरस्ताडनमब्रह्मण्यमुद्घोषितम् । ततो न राजापराधमंतरेण प्रजास्वकालमृत्युश्चरतीत्यात्मदोषं निरूपयति करुणामये रामभद्रे सहसैवाशरीरिणी वागुदचरत् ।

शंबूको नाम वृषलः पृथिव्यां तप्यते तपः ।
शीर्षच्छेद्यः स ते राम तं हत्वा जीवय द्विजम् ॥ ३ ॥

इत्युपश्रुत्यैव कृपाणपाणिः पुष्पकं विमानमारुह्य सर्वा दिशो विदिशश्च शूद्रतापसान्वेषणाय जगत्पतिः संचरितुमारब्धवान् ।

**वासंती**—शंबूको नाम धूमपः शूद्रोऽस्मिन्नेव जनस्थाने तपश्चरति तदपि रामभद्रः पुनरपीदं वनमलंकुर्यात् ।

**आत्रेयी**—भद्रे गम्यतेऽधुना ।

**वासंती**—एवमस्तु । कठोरीभूतो दिवसः ।

उत्तररामचरितम् ।

---

## २२. वनगमनोद्यमात्सीतां नियन्तुं रामचन्द्रो व्यवस्यति ।

स एवं ब्रुवतीं सीतां धर्मज्ञो धर्मवत्सलः ।
न नेतुं कुरुते बुद्धिं वने दुःखानि चिंतयन् ॥ १
सांत्वयित्वा ततस्तां तु बाष्पदूषितलोचनाम् ।
निवर्तनार्थे धर्मात्मा वाक्यमेतदुवाच ह ॥ २

सीते महाकुलीनासि धर्मे च निरता सदा ।
इहाचरस्व धर्मं त्वं यथा मे मनसः सुखम् ॥ ३
सीते यथा त्वां वक्ष्यामि तथा कार्यं त्वयाबले ।
वने दोषा हि बहवो वसतस्तान्निबोध मे ॥ ४
सीते विमुच्यतामेषा वनवासकृता मतिः ।
बहुदोषं हि कान्तारं वनमित्यभिधीयते ॥ ५
हितबुद्ध्या खलु वचो मयैतदभिधीयते ।
सदा सुखं न जानामि दुःखमेव सदा वनम् ॥ ६
गिरिनिर्झरसंभूता गिरिकंदरवासिनाम् ।
सिंहानां निनदा दुःखाः श्रोतुं दुःखमतो वनम् ॥ ७
क्रीडन्तश्चापि विश्रब्धा मत्ताः शून्ये तथा मृगाः ।
दृष्ट्वा समभिवर्तन्ते सीते दुःखमतो वनम् ॥ ८
सग्राहाः सरितश्चैव पंकवत्यस्तु दुस्तराः ।
मत्तैरपि गजैर्नित्यमतो दुःखतरं वनम् ॥ ९
लताकंटकसंकीर्णाः कृकवाकूपनादिताः ।
निरपाश्च सदुःखाश्च मार्गा दुःखमतो वनम् ॥ १०
सुप्यते पर्णशय्यासु स्वयंभग्नासु भूतले ।
रात्रिषु श्रमखिन्नेन तस्माद् दुःखमतो वनम् ॥ ११
अहोरात्रं च संतोषः कर्तव्यो नियतात्मना ।
फलैर्वृक्षावपतितैः सीते दुःखमतो वनम् ॥ १२
उपवासश्च कर्तव्यो यथाप्राणेन मैथिलि ।
जटाभारश्च कर्तव्यो वल्कलांबरधारणम् ॥ १३
देवतानां पितृणां च कर्तव्यं विधिपूर्वकम् ।
प्राप्तानामतिथीनां च नित्यशः प्रतिपूजनम् ॥ १४
कार्यस्त्रिरभिषेकश्च काले काले च नित्यशः ।
चरतां नियमेनैव तस्माद् दुःखतरं वनम् ॥ १५

उपहारश्च कर्तव्यः कुसुमैः स्वयमाहृतैः ।
आर्षेण विधिना वेद्यां सीते दुःखमतो वनम् ॥ १६

यथालब्धेन कर्तव्यः संतोषस्तेन मैथिलि ।
यथाहारैर्वनचरैः सीते दुःखमतो वनम् ॥ १७

अतीव वातस्तिमिरं बुभुक्षा चास्ति नित्यशः ।
भयानि च महांत्यत्र अतो दुःखतरं वनम् ॥ १८

सरीसृपाश्च बहवो बहुरूपाश्च भामिनि ।
चरन्ति पथि ते दर्पात्ततो दुःखतरं वनम् ॥ १९

क्रोधलोभौ विमोक्तव्यौ कर्तव्या तपसे मतिः ।
न भेतव्यं च भेतव्ये दुःखं नित्यमतो वनम् ॥ २०

तदलं ते वनं गत्वा क्षेमं न हि वनं तव ।
विमृशन्निव पश्यामि बहुदोषकरं वनम् ॥ २१

रामायणम्

---

## २३. अङ्गुलीयकोपलब्धिः ।

( ततः प्रविशति नागरिकः श्यालः पश्चाद्बद्धपुरुषमादाय रक्षिणौ च )

**रक्षिणौ**–( ताडयित्वा ) अरे कुम्भीरक कथय कुत्र त्वयैतन्मणिबन्धोत्कीर्णनामधेयं राजकीयमङ्गुलीयकं समासादितम् ।

**पुरुषः**–( भीतिनाटितकेन ) प्रसीदन्तु भावमिश्राः । अहं नेदृशकर्मकारी ।

**प्रथमः**–किं शोभनो ब्राह्मण इति कलयित्वा राज्ञा प्रतिग्रहो दत्तः ।

**पुरुषः**–शृणुतेदानीम् । अहं शक्रावताराभ्यन्तरवासी धीवरः ।

**द्वितीयः**–पाटच्चर किमस्माभिर्जातिः पृष्टा ।

**श्यालः**–सूचक कथयतु सर्वमनुक्रमेण । नैनमन्तरे प्रतिबन्धय ।

**उभौ**—यदावुत्त आज्ञापयति । कथय ।

**पुरुषः**—अहं जालोद्गालादिभिर्मत्स्यबन्धनोपायैः कुटुम्बभरणं करोमि ।

**श्यालः**—विशुद्ध इदानीमाजीवः ।

**पुरुषः**—सहजं किल यद्विनिंदितं न खलु तत्कर्म विवर्जनीयम् ।
पशुमारणकर्मदारुणोऽनुकम्पामृदुरेव श्रोत्रियः ।

**श्यालः**—ततस्ततः ।

**पुरुषः**—एकस्मिन्दिवसे खण्डशो रोहितमत्स्यो मया कल्पितो यावत्तस्योदराभ्यन्तर इदं रत्नभासुरमङ्गुलीयकं दृष्टम् । पश्चादहं तस्य विक्रयाय दर्शयन् गृहीतो भावमिश्रैः । मारयत वा मुञ्चत वा, अयमस्यागमवृत्तान्तः ।

**श्यालः**—जानुक विस्रगन्धी गोधादी मत्स्यबन्ध एव निःसंशयम् ।

**रक्षिणौ**—तथा । गच्छ अरे गण्डभेदक ।

( सर्वे परिक्रामन्ति )

**श्यालः**—सूचक, इमं गोपुरद्वारेऽप्रमत्तौ प्रतिपालयतं यावदिदमङ्गुलीयकं यथागमनं भर्तुर्निवेद्य ततः शासनं प्रतीष्य निष्क्रामामि ।

**उभौ**—प्रविशत्वावुत्तः स्वामिप्रसादाय ।

( इति निष्क्रान्तः श्यालः )

**प्रथमः**—जानुक चिरायते खल्वावुत्तः ।

**द्वितीयः**—ननु अवसरोपसर्पणीया राजानः ।

**प्रथमः**—जानुक प्रस्फुरतो मम हस्तावस्य वधार्थं सुमनसः पिनद्धुम् । ( इति पुरुषं निर्दिशति )

**पुरुषः**—नार्हति भावोऽकारणमारणं भावयितुम् ।

**द्वितीयः**—( विलोक्य ) एष नौ स्वामी पत्रहस्तो राजशासनं प्रतीष्येतोमुखो दृश्यते । गृध्रबलिर्भविष्यसि शुनो मुखं वा द्रक्ष्यसि ।

[ प्रविश्य ]

**श्यालः**–मुच्यतामेष जालोपजीवी । उपपन्नः खल्वङ्गुलीयस्यागमः।

**सूचकः**–यथावुत्तो भणति ।

**द्वितीयः**–एष यमसदनं प्रविश्य प्रतिनिवृत्तः ।

**पुरुषः**-( श्यालं प्रणम्य ) भर्तः, अथ कीदृशो म आजीवः ।

**श्यालः**-एष भर्त्राङ्गुलीयकमूल्यसंमितः प्रसादोऽपि दापितः । [ इति पुरुषाय प्रयच्छति ]

**पुरुषः**–[ सप्रणामं प्रतिगृह्य ] भर्तः, अनुगृहीतोऽस्मि ।

**सूचकः**–एष नामानुग्रहो यच्छूलादवतार्य हस्तिस्कंधे प्रतिष्ठापितः ।

**जानुकः**–आवुत्त पारितोषिकं कथयति तेनाङ्गुलीयकेन भर्तुः संमतेन भवितव्यमिति ।

**श्यालः**–न तस्मिन्महार्हं रत्नं भर्तुर्बहुमतमिति तर्कयामि । तस्य दर्शनेन भर्तुरभिमतो जनः स्मारितः । मुहूर्तं प्रकृतिगम्भीरोऽपि पर्युत्सुकमना आसीत् ।

**सूचकः** –सेवितं नामावुत्तेन ।

**जानुकः**––ननु भण अस्य कृते मात्स्यिकभर्तुरिति । ( इति पुरुषमसूयया पश्यति ।

**पुरुषः**—भट्टारक, इतोऽर्धं युष्माकं सुमनोमूल्यं भवतु ।

**जानुकः**—एतावद्युज्यते ।

**श्यालः**—धीवर महत्तरस्त्वं प्रियवयस्यक इदानीं मे संवृत्तः । कादम्बरीसाक्षिकमस्माकं प्रथमसौहृदमिष्यते । तच्छौण्डिकापणमेव गच्छामः ।

अभिज्ञानशाकुन्तलम् ।

---

## २४. करुणविलासः ।

दैवे पराग्वदनशालिनि हंत जाते ।
यातेच संप्रति दिवं प्रति बंधुरत्ने ।
कस्मै मनः कथयितासि निजामवस्थां
कः शीतलैः शमयिता वचनैस्तवाधिम् ॥ १

प्रत्युद्गता सविनयं सहसा पुरेव
स्मेरैः स्मरस्य सचिवैः सरसावलोकैः ।
मामद्य मंजुरचनैर्वचनैश्च बाले ।
हा लेशतोऽपि न कथं शिशिरीकरोषि ॥ २

सर्वेऽपि विस्मृतिपथं विषयाः प्रयाता
विद्यापि खेदकलिता विमुखीबभूव ।
सा केवलं हरिणशावकलोचना मे ।
नैवापयाति हृदयादधिदेवतेव ॥ ३

निर्वाणमंगलपदं त्वरया विशंत्या
मुक्ता दयावति दयापि किल त्वयासौ ।
यन्मां न भामिनि निभालयसि प्रभात-
नीलारविंदमदभंगिपदैः कटाक्षैः ॥ ४

धृत्वा पदस्खलनभीतिवशात्करं मे
या रूढवत्यासि शिलाशकलं विवाहे ।
सा मां विहाय कथमद्य विलासिनि द्या-
मारोहसीति हृदयं शतधा प्रयाति ॥ ५

निर्दूषणा गुणवती रसभावपूर्णा
सालंकृतिः श्रवणकोमलवर्णराजिः ।
सा मामकीनकवितेव मनोऽभिरामा
रामा कदापि हृदयान्मम नापयाति ॥ ६

चिंता शशाम सकलापि सरोरुहाणा-
मिंदोश्च बिंबमसमां सुषमामयासीत् ।
अभ्युद्गतः कलकलः किल कोकिलानां
प्राणप्रिये यदवधि त्वमितो गतासि ॥ ७
सौदामनीविलसितप्रतिमानकांडे
दत्त्वा कियंत्यपि दिनानि महेंद्रभोगान् ।
मंत्रोज्झितस्य नृपतेरिव राज्यलक्ष्मी–
र्भाग्यच्युतस्य करतो मम निर्गताऽसि ॥ ८
केनापि मे विलसितेन समुद्गतस्य
कोपस्य किं न करभोरु वशंवदाऽभूः ।
यन्मां विहाय सहसैव पतिव्रतापि
यातासि मुक्तिरमणीसदनं विदूरम् ॥ ९
या तावकीनमधुरस्मितकांतिकांते
भूमंडले विफलतां कविषु व्यतानीत् ।
सा कातराक्षि विलयं त्वयि यातवत्यां
राकाधुना वहति वैभवमिंदिरायाः ॥ १०
मंदास्मितेन सुधया परिषिच्य या मां
नेत्रोत्पलैर्विकसितैरनिशं समीजे ।
सा नित्यमंगलमयी गृहदेवता मे
कामेश्वरी हृदयतो दयिता न याति ॥ ११
भूमौ स्थिता रमण नाथ मनोहरेति
संबोधनैर्यमधिरोपितवत्यसि द्याम् ।
स्वर्गं गता कथमिव क्षिपसि त्वमेण-
शावाक्षि तं धरणिधूलिषु मामिदानीम् ॥ १२
लावण्यमुज्ज्वलमपास्ततुलं च शीलं
लोकोत्तरं विनयमर्थमयं नयं च ।

एतान् गुणानशरणानथ मां च हित्वा
हा हंत सुंदरि कथं त्रिदिवं गतासि ! १३

कांत्या सुवर्णवरया परया च शुद्धया
नित्यं स्विकाः खलु शिखाः परितः क्षिपंतीम् ।
चेतोहरामपि कुशेशयलोचने त्वां ।
जानामि कोपकलुषो दहनो ददाह ॥ १४

कर्पूरवर्तिरिव लोचनतापहंत्री
फुल्लांबुजस्रगिव कंठसुखैकहेतुः ।
चेतश्चमत्कृतिपदं कवितेव रम्या
नम्या नरीभिरमरीव हि सा विरेजे ॥ १५

भामिनीविलासः ।

---

## २५. दुर्योधनादीनां पाण्डवनाशप्रयत्नः ।

मृते पितरि पांडवा वनात्प्रतिनिवृत्ता हस्तिनापुरे न्यवात्सुः । तान्द्रोणः सर्वं धनुर्वेदमध्यापिपत् । तैर्विद्यासु कलासु च कौरवा निरजेषत । तेषां तादृश उत्कर्षो दुर्योधनादिभिर्नासाहि । येन ते पाण्डवानां निग्रहनिर्वासनार्थं विविधानुपायान् न्ययूयुजन् । कुन्तीमपि दुरुक्तैरपिपीडन् । कर्णदुःशासनयोर्मते स्थितो दुर्योधनो वृकोदरं तीव्रविषमपीप्यत् । तद्विषं वृकोदरः सहान्नेनाजीजरत् । एकदा गाढं प्रसुप्तो भीमस्तैर्हस्तपादे न्यबन्धि गङ्गायास्तोयेषु च प्राक्षेपि । यदा त्वसावबोधि तदानायासेनैव बन्धनादात्मानमूमुचद्गङ्गां च बाहुभ्यामतरत् । ततो दुर्योधनप्रभृतय आशीविषैः कृष्णसर्पैस्तं शयानमदंदशन् । परं तेनापि स नैव व्यापादि । यदा त्वेवंविधैः संवृतैर्विवृतैरुपायैस्तं विनिहन्तुं नाशकंस्तदा कौरवा मिथोऽममन्त्रन्त । धृतराष्ट्रं च वशीकृत्य तदनुज्ञया पाडण्वान् वारणावतं प्रातिष्ठिपन् । तत्र तान्दग्धुकामास्ते

कौरवा जातुषे गृहे न्यवीवसन् । तत्तेषां दुर्मन्त्रितं विदुरः पाण्डवानवीविदद्रक्षणोपायं चासुसूचत् । तस्यादेशेन सुरङ्गां कृत्वा रजन्यां तैर्बहिरगामि नेदिष्ठं च वनमगाहि । तांस्तथा बहिर्गतानजानानाः कौरवास्तद्गृहं पुरोचनेनादीदहन् । दग्धाः सर्वे पाण्डवाः समातृका इति पुरोचनः कौरवेभ्यो न्यबूबुधत् ।

Third Sanskrit Course.

---

## २६. कुमारप्रत्यर्पणम् ।

( प्रविश्य )

**कञ्चुकी**—जयतु जयतु देवः । देव च्यवनाश्रमात् कुमारं गृहीत्वा तापसी सम्प्राप्ता देवं द्रष्टुमिच्छति ।

**राजा**—उभयमप्यविलंबितं प्रवेशय ।

**कञ्चुकी**—यदाज्ञापयति देवः ।

( इति निष्क्रम्य चापहस्तेन कुमारेण तापस्या च सह प्रविष्टः )

**कञ्चुकी**—इत इतो भगवती । ( सर्वे परिक्रामन्ति )

**विदूषकः**—( विलोक्य ) किं न खलु स एष तत्रभवान् क्षत्रियकुमारको यस्य नामांकितो गृध्रलक्षवेध्यर्धनाराचः । तथा बहुतरं भवन्तमनुकरोति ।

**राजा**—स्यादेवम् । अतः खलु

बाष्पायते निपतिता मम दृष्टिरस्मिन्
वात्सल्यबन्धि हृदयं मनसः प्रसादः ।
संजातवेपथुभिरुज्झितधैर्यवृत्ति-
रिच्छामि चैनमदयं परिरब्धुमङ्गैः ॥ १ ॥

**कञ्चुकी**—भगवति, एवं स्थीयताम् ।

( तापसीकुमारौ स्थितौ )

**राजा**—अम्ब । अभिवादये ।

**तापसी**—महाभाग सोमवंशविस्तारयिता भव। (आत्मगतम्) अहो ! अनाख्यातोऽपि विज्ञातोऽस्य राजर्षेरौरसः संबन्धः । ( प्रकाशम् ) जात, प्रणम ते गुरुम् ।

**कुमारः**—(चापगर्भमञ्जलिं करोति )

**राजा**—आयुष्मान् भव ।

**कुमारः**—( आत्मगतम्)

यदि हार्दमिदं श्रुत्वा पिता ममायं सुतोऽहमस्येति ।
उत्सवङ्गधितानां गुरुषु भवेत् कीदृशः स्नेहः ॥ २ ॥

**राजा**—भगवति, किमागमनप्रयोजनम ।

**तापसी**—शृणोतु महाराजः । एष दीर्घायुरायुर्जातमात्र एव, ऊर्वश्या किमपि निमित्तमवेक्ष्य मम हस्ते न्यासीकृतः । यत् क्षत्रियकुमारस्य जातकर्मादि विधानं तदस्य भगवता च्यवनेनाशेषमनुष्ठितम् । गृहीतविद्यो धनुर्वेदेऽभिविनीतः ।

**राजा**—संनाथः खलु संवृत्तः ।

**तापसी**—अथ पुष्पसमिदर्थमृषिकुमारकैः सह गतेनानेनाश्रमविरुद्धमाचरितम् ।

**विदूषकः**—(सावेगम्) किमिव ।

**तापसी**—गृहीतामिषः किल गृध्रः पादपशिखरे निलीयमानोऽनेन लक्ष्यीकृतो बाणस्य ।

**विदूषकः**—( राजानमवलोकयति )

**राजा**—ततस्ततः ।

**तापसी**—तत उपलब्धवृत्तान्तेन भगवता च्यवनेनाहमादिष्टा । निर्यातय हस्तन्यासमिति । तदिच्छामि देवीमूर्वशीं प्रेक्षितुम् ।

**राजा**–तेन ह्यासनमनुगृह्णातु भगवती ।

**तापसी**-[ उपनीत आसन उपविशति ]

**राजा**–लातव्य, आहूयतामूर्वशी ।

**कञ्चुकी**—यथाज्ञापयति देवः । [ इति निष्क्रान्तः ]

**राजा**–[कुमारमवलोक्य] एह्येहि वत्स ।

सर्वाङ्गीणः स्पर्शः सुतस्य किल तेन मामुपगतेन ।
आह्लादयस्व तावच्चन्द्रकरश्चन्द्रकान्तमिव ॥ ३ ॥

**तापसी**—जात । आनन्दय पितरम् ।

**कुमारः**—[राजानमुपगम्य पादग्रहणं करोति]

**राजा**—(कुमारं परिष्वज्य पादपीठे चोपवेश्य ) वत्स, इतस्तव पितुः प्रियसखं ब्राह्मणमशङ्कितो वन्दस्व ।

**विदूषकः**—किमिति शङ्किष्यते । नन्वाश्रमवासपरिचित एव शाखामृगः ।

**कुमारः**–( सस्मितम् ) तात वन्दे ।

**विदूषकः**–स्वस्ति भवते ।

( ततः प्रविशत्यूर्वशी कञ्चुकी च )

**कञ्चुकी**—इत इतो देवी ।

**ऊर्वशी**–( कुमारमवलोक्य ) को नु खल्वेष सबाणासनः पादपीठे स्वयं महाराजेन संयम्यमानशिखण्डकस्तिष्ठति । (तापसीं दृष्ट्वा ) अहो सत्यवतीसूचितो मम पुत्रक आयुः । महान् खलु संवृत्तः । (परिक्रामति)

**राजा**–(ऊर्वशीं दृष्ट्वा)

इयं ते जननी प्राप्ता त्वदालोकनतत्परा ।
स्नेहप्रस्रवनिर्भिन्नमुद्वहन्ती स्तनांशुकम् ॥ ४ ॥

**तापसी**–जात, एहि प्रत्युद्गच्छ मातरम् ।

**कुमारः**–(ऊर्वशीं प्रत्युद्गच्छति)

**ऊर्वशी**—अम्ब पादप्रणामं करोमि ।

**तापसी**—वत्से भर्तुर्बहुमता भव ।

**तापसी**—( कुमारमुन्नामितमुखं परिष्वज्य ) वत्स पितरमाराधयिता भव । (राजानमुपेत्य) जयतु महाराजः ।

**राजा**—स्वागतं पुत्रवत्यै । इत आस्यताम् । ( अर्धासनं ददाति )

**ऊर्वशी**—( उपविशति )

( सर्वे यथोचितमुपविशन्ति )

**तापसी**—वत्से, एष गृहीतविद्य आयुः सांप्रतं कवचहरः संवृत्तः । तदेतस्य ते भर्तुः समक्षं निर्यातितो हस्तनिक्षेपः । तद्विसर्जयितुमिच्छामि । उपरुध्यते ममाश्रमधर्मः ।

**ऊर्वशी**—चिरस्यार्यां दृष्ट्वाधिकतरमावितृष्णास्मि । न शक्नोमि विस्रष्टुम् । अन्याय्यं पुनरुपरोद्धुम् । तद्गच्छत्वार्या पुनर्दर्शनाय ।

**तापसी**—एवं भवतु ।

**कुमारः**—आर्ये यदि सत्यमेव निवर्तसे तदा मामप्याश्रमं नेतुमर्हसि।

**राजा**—अयि वत्स उषितं त्वया पूर्वस्मिन्नाश्रमे । द्वितीयमध्यासितुं तव समयः ।

**तापसी**—जात गुरोर्वचनमनुतिष्ठ ।

**कुमारः**—तेन हि

यः सुप्तवान् मदङ्के शिखण्डकण्डूयनोपलब्धसुखः ।
तं मे जातकलापं प्रेषय मणिकण्ठकं शिखिनम् ॥

**तापसी**—(विहस्य) एवं करोमि । स्वस्ति भवतु युष्मभ्यम् ।

[ निष्क्रान्ता ]

विक्रमोर्वशीयम् ।

## २७. अज्ञनिन्दा ।

स्वायत्तमेकान्तगुणं विधात्रा, विनिर्मितं छादनमज्ञतायाः ।
विशेषतः सर्वविदां समाजे, विभूषणं मौनमपण्डितानाम् ॥ १
यदा किञ्चिज्ज्ञोऽहं द्विप इव मदान्धः समभवं
तदा सर्वज्ञोऽस्मीत्यभवदवलिप्तं मम मनः ।
यदा किञ्चित्किञ्चिद् बुधजनसकाशादवगतं
तदा मूर्खोऽस्मीति ज्वर इव मदो मे व्यपगतः ॥ २
व्यालं बालमृणालतन्तुभिरसौ रोद्धुं समुज्जृम्भते ।
छेत्तुं वज्रमणीञ् शिरीषकुसुमप्रान्तेन सन्नह्यते ॥
माधुर्यं मधुबिन्दुना रचयितुं क्षाराम्बुधेरीहते ।
नेतुं वांछति यः खलान् पथि सतां सूक्तैः सुधास्यन्दिभिः ॥ ३
कृमिकुलचितं लालाक्लिन्नं विगन्धि जुगुप्सितं ।
निरुपमरसप्रीत्या खादन्नरास्थि निरामिषम् ॥
सुरपतिमपि श्वा पार्श्वस्थं विलोक्य न शङ्कते ।
न हि गणयति क्षुद्रो जन्तुः परिग्रहफल्गुताम् ॥ ४
शिरः शार्वं स्वर्गात् पशुपतिशिरस्तः क्षितिधरं ।
महीध्रादुत्तुङ्गादवनिमवनेश्चापि जलधिम् ॥
अधोऽधो गङ्गेयं पदमुपगता स्तोकमथवा ।
विवेकभ्रष्टानां भवति विनिपातः शतमुखः ॥ ५
शक्यो वारयितुं जलेन हुतभुक् छत्रेण सूर्यातपो
नागेन्द्रो निशिताङ्कुशेन समदो दण्डेन गोगर्दभौ ॥
व्याधिर्भेषजसंग्रहैश्च विविधैर्मन्त्रप्रयोगैर्विषं
सर्वस्यौषधमस्ति शास्त्रविहितं मूर्खस्य नास्त्यौषधम् ॥ ६
प्रसह्य मणिमुद्धरेन्मकरवक्त्रदंष्ट्राङ्कुरा-
त्समुद्रमपि सन्तरेत्प्रचलदूर्मिमालाकुलम् ॥

भुजङ्गमपि कोपितं शिरसि पुष्पवद्धारये-
न्न तु प्रतिनिविष्टमूर्खजनचित्तमाराधयेत् ॥ ७
लभेत सिकतासु तैलमपि यत्नतः पीडयन् ।
पिबेच्च मृगतृष्णिकासु सलिलं पिपासार्दितः ।
कदाचिदपि पर्यटञ् शशविषाणमासादये-
न्न तु प्रतिनिविष्टमूर्खजनचित्तमाराधयेत् ॥ ८
येषां न विद्या न तपो न दानं, ज्ञानं न शीलं न गुणो न धर्मः ।
ते मर्त्यलोके भुवि भारभूताः, मनुष्यरूपेण मृगाश्चरन्ति ॥ ९

भर्तृहरिकृतं नीतिशतकम् ।

---

## २८. वासन्तीवाग्दण्डः ।

**वासन्ती**—अत्र तावदासनपरिग्रहं करोतु देवः ।

एतत्तदेव कदलीवनमध्यवर्ति ।
कान्तासखस्य शयनीयशिलातलं ते ।
अत्र स्थिता तृणमदाद् बहुशो यदेभ्यः ।
सीता ततो हरिणकैर्न विमुच्यते स्म ॥ १

**रामः**—इदं तावदशक्यमेव द्रष्टुम् । (इत्यन्यतो रुदन्नुपविशति )

**वासन्ती**—ददतु तरवः पुष्पैरर्घ्यं फलैश्च मधुश्च्युतः
स्फुटितकमलामोदप्रायाः प्रवान्तु वनानिलाः ।
कलमविरलं रत्युकण्ठाः क्वणन्तु शकुन्तयः
पुनरिदमयं देवो रामः स्वयं वनमागतः ॥ २

**रामः**—एहि सखि वासन्ति । नन्वितः स्थीयताम् ।

**वासन्ती**-( उपविश्य सास्रम् ) महाराज । अपि कुशलं कुमार-लक्ष्मणस्य ।

**रामः**–( अश्रुतिमभिनीय )

करकमलवितीर्णैरम्बुनीवारशष्पै-
स्तरुशकुनिकुरङ्गान् मैथिली यानपुष्यत् ।
भवति मम विकारस्तेषु दृष्टेषु कोऽपि
द्रव इव हृदयस्य प्रस्तरोद्भेदयोग्यः ॥ ३

**वासन्ती**–महाराज । ननु पृच्छामि । अपि कुशलं कुमारलक्ष्मणस्य ।

**रामः**-(स्वगतम् ) अये महाराजेति निष्प्रणयमामन्त्रणपदं सौमित्रिमात्रे च बाष्पस्खलिताक्षरः कुशलप्रश्नः । तथा मन्ये विदितसीतावृत्तान्तेयमिति ( प्रकाशम् ) आं कुशलं कुमारस्य ( रोदिति )

**वासन्ती**–अयि देव । दारुणः खल्वसि ।

त्वं जीवितं त्वमसि मे हृदयं द्वितीयं । त्वं कौमुदी नयनयोरमृतं त्वमङ्गे।
इत्यादिभिः प्रियशतैरनुरुध्य मुग्धां । तामेव–शान्तमथवा किमिहोत्तरेण ४

( इति मूर्च्छति )

**रामः**–स्थाने खलु वाक्यनिवृत्तिर्मोहश्च । सखि समाश्वसिहि समाश्वसिहि ।

**वासन्ती**–(समाश्वस्य) तत् किमिदमकार्यमनुष्ठितं देवेन ।

**रामः**–लोको न मृष्यतीति ।

**वासन्ती**–तत् कस्य हेतोः ।

**रामः**–स एव जानाति किमपि ।

**वासन्ती**–अयि कठोर यशः किल ते प्रियं
किमयशो ननु घोरमतः परम् ।
किमभवद्विपिने हरिणीदृशः
कथय नाथ कथं बत मन्यसे ॥ ५

**रामः**–सखि किमत्र मन्तव्यम् ।

त्रस्तैकहायनकुरङ्गविलोलदृष्टे-
स्तस्याः परिस्फुरितगर्भभरालसायाः ।
ज्योत्स्नामयीव मृदुबालमृणालकल्पा
क्रव्याद्भिरङ्गलतिका नियतं विलुप्ता ॥ ६

हा प्रिये जानकि ! क्वासि ? कष्टं भोः कष्टम् ।

दलति हृदयं गाढोद्वेगं द्विधा न तु भिद्यते
वहति विकलः कायो मोहं न मुञ्चति चेतनाम् ।
ज्वलयति तनूमन्तर्दाहः करोति न भस्मसात्
प्रहरति विधिर्मर्मच्छेदी न कृंतति जीवितम् ॥ ७

हे भवन्तः पौरजानपदाः ।

न किल भवतां स्थानं देव्या गृहेऽभिमतं तत-
स्तृणमिव वने शून्ये त्यक्ता न चाप्यनुशोचिता ।
चिरपरिचितास्ते ते भावाः परिभ्रमयन्ति मा-
मिदमशरणैरद्याप्येवं प्रसीदत रुद्यते ॥ ८

**वासन्ती**-देव । अतिक्रान्ते धैर्यमवलम्ब्यताम् ।

**रामः**-किमुच्यते धैर्यमिति ।

देव्या शून्यस्य जगतो द्वादशः परिवत्सरः
लुप्तं सीतेति नामापि न च रामो न जीवति ॥ ९

अयि वासन्ति, मया खलु

यथा तिरश्चीनमलातशल्यं प्रत्युप्तमन्तः सविषश्च दंशः ।
तथैव तीव्रो हृदि शोकशङ्कुर्मर्माणि कृन्तन्नपि किं न सोढः ॥ १०

एवमतिनिष्कम्पस्तम्भितान्तःकरणस्यापि मम संस्तुततत्तत्प्रियवस्तु-दर्शनादद्यायमावेगः ।

**वासन्ती**-( स्वगतम् ) कष्टमभ्यापन्नो देवस्तदन्यतः क्षिपामि तावत् । ( प्रकाशम् ) चिरपरिचितानेताञ्जनस्थानभागानवलोकयतु देवः ।

**रामः**—एवमस्तु । (इत्युत्थाय परिक्रामति)

**वासन्ती**—( सकरुणम् ) देव देव ।

अस्मिन्नेव लतागृहे त्वमभवस्तन्मार्गदत्तेक्षणः
सा हंसैः कृतकौतुका चिरमभूद्गोदावरीसैकते ।
आयान्त्या परिदुर्मनायितमिव त्वां वीक्ष्य बद्धस्तया
कातर्यादरविंदकुड्मलनिभो मुग्धः प्रणामाञ्जलिः ॥ ११

**रामः**—चण्डि जानकि । इतस्ततो दृश्यस इव न चानुकम्पसे ।

हा हा देवि स्फुटति हृदयं स्रंसते देहबन्धः ।
शून्यं मन्ये जगदविरतज्वालमन्तर्ज्वलामि ॥
सीदन्नन्धे तमसि विधुरो मज्जतीवान्तरात्मा ।
विश्वङ्मोहः स्थगयति कथं मन्दभाग्यः करोमि १२

( इति मूर्च्छति )

**वासन्ती**—कथमद्यापि नोच्छ्वसिति रामः । हा प्रियसखि सीते क्वासि । संभावयात्मनो जीवितेश्वरम् ।

उत्तररामचरितम् ।

---

## २९. सन्धिः ।

( प्रथमः परिच्छेदः )

ततस्तेन राजहंसेनोक्तम्—केनास्मद्दुर्गे निक्षिप्तोऽग्निः । किं पारक्येण किंवास्मद्दुर्गवासिना केनापि विपक्षप्रयुक्तेन । चक्रो ब्रूते—देव भवतो निष्कारणबन्धुरसौ मेघवर्णः सपरिवारो न दृश्यते । तन्मन्ये तस्यैव विचेष्टितमिदम् । राजा क्षणं विचिन्त्याह । अस्ति तावदेव मम दुर्दैवमेतत् । मन्त्री ब्रूते—उक्तमेव यथा विषमां दशां प्राप्य नरो दैवं गर्हयते । अपरं च । हितकामानां सुहृदां वाक्यं यो नाभिनन्दति स नूनं विनश्यति ।

अथ प्रणिधिर्बकस्तत्रागत्योवाच—देव प्रागेव मया निगदितं दुर्गशोधनं हि प्रतिक्षणं कर्तव्यमिति। तच्च युष्माभिर्न कृतम्। अतस्तदनवधानस्य फलमनुभूतम्। दुर्गदाहश्चायं मेघवर्णनाम्ना वायसेन गृध्रप्रयुक्तेन कृतः। राजा निःश्वस्याह—

प्रणयादुपकाराद्वा यो विश्वसिति शत्रुषु।
स सुप्त इव वृक्षाग्रात् पतितः प्रतिबुध्यते॥ १

प्रणिधिरुवाच—इतो दुर्गदाहं विधाय यदा गतो मेघवर्णस्तदा चित्रवर्णेन प्रसादितेनोक्तम्—अयं मेघवर्णोऽत्र कर्पूरद्वीपराज्येऽभिषिच्यताम्। चक्रवाको ब्रूते—ततस्ततः। प्रणिधिरुवाच—ततः प्रधानमन्त्रिणा गृध्रेणाभिहितम्। देव नेदमुचितम्। प्रसादान्तरं किमपि क्रियताम्। महतामास्पदे नीचः कदापि न कर्तव्यः। ततः पुनरपि चित्रवर्णोऽवदत्। शृणु तावन्मन्त्रिन्। मयैतदालोचितमस्ति यदत्रावस्थितेन मेघवर्णेन राज्ञा यावन्ति वस्तूनि कर्पूरद्वीपस्योत्तमानि तावन्त्यस्माकमुपनेतव्यानि। तेन महता विलासेनास्माभिर्विंध्याचले स्थातव्यम्। ततो राजा रहसि गृध्रमुवाच। तात यथाकर्तव्यमुपदिश। गृध्रो ब्रूते, शृणु देव किमस्माभिर्बलदर्पाद् दुर्गं भग्नं भवतो वा प्रतापाधिष्ठितेनोपायेन। राजा ब्रूते भवतामुपायेन। गृध्रो ब्रूते—यद्यस्मद्वचनं क्रियते तदा स्वदेशं गम्यताम्। अन्यथा वर्षाकाले प्राप्ते तुल्यबलेन सह पुनर्विग्रहे सत्यस्माकं परभूमिष्ठानां स्वदेशगमनमपि दुर्लभं भविष्यति। सुखशोभार्थं च सन्धाय गम्यताम्। दुर्गं भग्नं कीर्तिश्च लब्धैव। मम सम्मतं तावदेतत्। राजाह। प्रागेव किं नोक्तं भवद्भिः। मन्त्री ब्रवीति, मद्वचनं किमवसानपर्यन्तं श्रुतं भवद्भिः। तदापि मम सम्मत्या नायं विग्रहारम्भः। सन्धेयगुणयुक्तोऽयं हिरण्यगर्भो न विग्राह्यः। चक्रवाकोऽवदत् प्रणिधे सर्वमवगतम्। व्रज पुनर्ज्ञात्वागमिष्यासि। राजा चक्रवाकं पृष्टवान्—मन्त्रिन् असन्धेयाः कति। तानपि ज्ञातुमिच्छामि। मन्त्री ब्रूते देव कथयामि शृणु। बालो

वृद्धो दीर्घरोगी ज्ञातिबहिष्कृतो भीरुको लुब्धो विषयासक्तो देवनिन्दको दैवोपहतको दैवचिन्तको दुर्भिक्षव्यसनोपेतोऽदेशस्थो बहुरिपुः सत्यधर्म-पराङ्मुखश्चेत्येतैर्नृभिः सन्धिं न कुर्वीत। एते विगृह्यमाणाः क्षिप्रं रिपोर्वशं यान्ति। अपरमपि कथयामि। सामदामदण्डभेदाश्चत्वार उपायाः। उत्साहशक्तिर्मन्त्रशक्तिः प्रभुशक्तिश्चेति शक्तित्रयम्। एतत्सर्वमालोच्य नित्यं विजिगीषवो भवन्ति महान्तः। किन्तु देव यद्यपि महामन्त्रिणा गृध्रेण सन्धानमुपन्यस्तं तथापि तेन राज्ञा संप्रति भूतजयदर्पान्न मन्तव्यम्। तदेवं क्रियताम्। सिंहलद्वीपस्य महाबलो नाम सारसो राजास्मन्मित्रं जम्बुद्वीपे कोपं जनयतु। राज्ञैवमस्त्विति निगद्य विचित्रनामा बकः सुगुप्तलेखं दत्त्वा सिंहलद्वीपं प्रस्थापितः।

( द्वितीयः परिच्छेदः )

अथ प्रणिधिरागत्योवाच—देव श्रूयतां तत्रत्यप्रस्तावः। एवं तत्र गृध्रेणोक्तम्—देव यन्मेघवर्णस्तत्र चिरमुषितः स वेत्ति किं सन्धेयगुण-युक्तो हिरण्यगर्भो राजा न वेति। ततोऽसौ मेघवर्णश्चित्रवर्णेन राज्ञा समाहूय पृष्टः। वायस कीदृशोऽसौ हिरण्यगर्भः। चक्रवाको मन्त्री वा कीदृशः। वायस उवाच देव हिरण्यगर्भो राजा युधिष्ठिरसमो महाशयः। चक्रवाकसमो मन्त्री न क्वाप्यवलोक्यते। राजाह। यद्येवं तदा कथमसौ त्वया वञ्चितः। विहस्य मेघवर्णः प्राह। शृणु देव। तेन मन्त्रिणाऽहं प्रथम-दर्शन एव ज्ञातः। किन्तु महाशयोऽसौ राजा मया विप्रलब्धः। राजाह मेघवर्ण, कथं शत्रुमध्ये त्वया चिरमुषितम्। कथं वा तेषामनुनयः कृतः। मेघवर्ण उवाच—देव स्वामिकार्यार्थिना प्रयोजनवशाद् किं न क्रियते। सर्वथा सन्धेयोऽयं हिरण्यगर्भो राजा। इति मे मतिः। राजोवाच, कोऽयं भवतो विचारः। यतो जितस्तावदयमस्माभिस्ततो यद्यस्मत्से-वया वसति तदास्ताम्। नो चेद्विगृह्यताम्।

अत्रान्तरे जम्बुद्वीपादागत्य शुकेनोक्तम्। देव सिंहलद्वीपस्य सारसो

राजा संप्रति जम्बुद्वीपमाक्रम्यावतिष्ठते। राजा ससंभ्रमं ब्रूते—किम्। शुकः पूर्वोक्तं कथयति। गृध्रः स्वगतमुवाच। साधु रे चक्रवाक मन्त्रिन् सर्वज्ञ साधु साधु। राजा सकोपमाह—आस्तां तावदयम्। गत्वा तमेव समुन्मूलयामि। दूरदर्शी विहस्याह—शरन्मेघवद् वृथैव घनगर्जितं न कार्यम्। देव किमिति विना सन्धानं गमनमस्ति। यतस्तदास्मत्पश्चात्प्रकोपोऽनेन कर्तव्यः। राजाह, मन्त्रिन्। एष ते निश्चयः। मन्त्री ब्रूते—एवमेव। तथाहि

सहसा विदधीत न क्रियामविवेकः परमापदां पदम्।
वृणते हि विमृश्यकारिणं गुणलुब्धाः स्वयमेव सपम्दः॥ १

तद्देव यदीदानीमस्मद्वचनं क्रियते तदा सन्धाय गम्यताम्। सिद्धिर्हि साम्नि व्यवस्थिता। राजाह—कथमेवं संभवति। मन्त्री ब्रूते-देव सत्वरं भविष्यति। यतो विशेषतश्चायं धर्मज्ञो राजा सर्वज्ञो मन्त्री च। ज्ञातमेतन्मया पूर्वं मेघवर्णवचनात् तत्कृतकार्यसन्दर्शनाच्च। राजा, अलमुत्तरोत्तरेण। यथाभिप्रेतमनुष्ठीयताम्। एतन्मन्त्रयित्वा गृध्रो महामन्त्री तत्र यथार्हं कर्तव्यमित्युक्त्वा दुर्गाभ्यन्तरं चलितः।

(तृतीयः परिच्छेदः।)

ततः प्रणिधिबकेनागत्य राज्ञो हिरण्यगर्भस्य निवेदितम्। देव सन्धिं कर्तुं महामन्त्री गृध्रोऽस्मत्समीपमागच्छति। राजहंसो ब्रूते, मन्त्रिन् पुनः सम्बन्धिना केनचिदत्रागन्तव्यम्। सर्वज्ञो विहस्याह। देव न शङ्कास्पदमेतद्। यतोऽसौ महाशयो दूरदर्शी। अथवा स्थितिरियं मन्दमतीनाम्। कदाचिच्छङ्कैव न क्रियते। कदाचित् सर्वत्र शङ्का। तद्देव यथाशक्ति तत्पूजार्थं रत्नोपहारादिसामग्री सुसज्जीक्रियताम्। तथानुष्ठिते सति स गृध्रो मन्त्री दुर्गद्वाराच्चक्रवाकेणोपगम्य सत्कृत्यानीय राजदर्शनं कारितो दत्तासन उपविष्टः। चक्रवाक उवाच—युष्मदायत्तं सर्वम्। स्वेच्छयोपभुज्यतामिदं राज्यम्।

राजहंसो ब्रूते—एवमेव । दूरदर्शी कथयति एवमेवैतत् । किन्त्विदानीं बहुप्रपञ्चवचनं निष्प्रयोजनम् । तदिदानीं सन्धाय प्रस्थाप्यतामयं महाप्रतापश्चित्रवर्णो राजा । चक्रवाको ब्रूते—यथा सन्धानं कार्यं तदप्युच्यताम् । राजहंसो ब्रूते, कति प्रकाराः सन्धीनां भवन्ति । गृध्रो ब्रूते बहवः सन्ति । किंतु तेषां कांचनाभिधानसन्धिर्विधेयः । सर्वज्ञो ब्रूते एवमस्तु । ततो राजहंसेन राज्ञा वस्त्रालङ्कारोपहारैः स मन्त्री दूरदर्शी पूजितः प्रहृष्टमनाश्चक्रवाकं गृहीत्वा राज्ञो मयूरस्य सन्निधानं गतः । तत्र चित्रवर्णेन राज्ञा सर्वज्ञो गृध्रवचनाद्बहुमानदानपुरःसरं संभाषितस्तथाविधं सन्धिं स्वीकृत्य राजहंससमीपं प्रस्थापितः । दूरदर्शी ब्रूते—देव सिद्धं नः समीहितम् । इदानीं स्वस्थानमेव विन्ध्याचलं व्यावृत्य प्रतिगम्यताम् । अथ सर्वे स्वस्थानं प्राप्य मनोभिलषितं फलं प्राप्नुवन् ।

हितोपदेशः ।

---

## ३०. बककुलीरकयोः ।

अस्ति कस्मिंश्चित्प्रदेशे नानाजलचरसनाथं सरः । तत्र च कृताश्रयो बक एको वृद्धभावमुपागतो मत्स्यान्व्यापादयितुमसमर्थः । ततश्च क्षुत्क्षामकण्ठः सरस्तीर उपविष्टो मुक्ताफलसदृशैरश्रुप्रवाहैर्धरातलमभिषिंचन् रुरोद । एकः कुलीरको नानाजलचरसमेतः समेत्य तस्य दुःखेन दुःखितः सादरमिदमूचे । किमद्य त्वयाहारवृत्तिर्नानुष्ठीयते । केवलमश्रुपूर्णनेत्राभ्यां सनिःश्वासेन स्थीयते । स आह । वत्स सत्यमुपलक्षितं भवता । मया हि मत्स्यादनं प्रति परमवैराग्यतया सांप्रतं प्रायोपवेशनं कृतम् । तेनाहं समीपगतानपि मत्स्यान्न भक्षयामि । कुलीरकस्तच्छ्रुत्वा प्राह । किं तद्वैराग्यकारणम् । स प्राह ।

वत्स, अहमस्मिन्सरसि जातो वृद्धिं गतश्च । तन्मयैतच्छ्रुतं यद् द्वादशवार्षिक्यनावृष्टिः संपद्यते लग्ना । कुलीरक आह । कस्मात्तच्छ्रुतम् । बक आह । दैवज्ञमुखात् । यतः शनैश्चरो रोहिणीशकटं भित्त्वा भौमश्च शुक्रश्च प्रयास्यति । तदेतत्सरः स्वल्पतोयं वर्तते । शीघ्रं शोषं यास्यति । अस्मिञ् शुष्के यैः सहाहं वृद्धिं गतः सदैव क्रीडितश्च ते सर्वे तोयाभावान्नाशं यास्यंति । तत्तेषां वियोगं द्रष्टुमहमसमर्थः। तेनैतत्प्रायोपवेशनं कृतम् । सांप्रतं सर्वेषां स्वल्पजलाशयानां जलचरा गुरुजलाशयेषु स्वस्वजनैर्नीयन्ते । केचिच्च मकरगोधाशिशुमारजलहस्तिप्रभृतयः स्वयमेव गच्छंति । अत्र पुनः सरसि ये जलचरास्ते निश्चिताः संति । तेनाहं विशेषाद्रोदिमि यद्बीजशेषमात्रमप्यत्र नोद्धरिष्यति । ततः स तदाकर्ण्यान्येषामपि जलचराणां तत्तस्य वचनं निवेदयामास । अथ ते सर्वे भयत्रस्तमनसो मत्स्यकच्छपप्रभृतयस्तमभ्युपेत्य पप्रच्छुः । माम, अस्ति कश्चिदुपायो येनास्माकं रक्षा भवति । बक आह । अस्त्यस्य जलाशयस्य नातिदूरे प्रभूतजलसनाथं सरः पद्मिनीखंडमंडितं । तच्चतुर्विंशतेरपि वर्षाणामवृष्ट्या न शोषमेति । तद्यदि पृष्ठं कश्चिदारोहति तदहं तं तत्र नयामि । अथ ते तत्र विश्वासमापन्नास्तात मातुल भ्रातरिति ब्रुवाणा अहं पूर्वमहं पूर्वमिति समंतात्परितस्थुः । सोऽपि दुष्टाशयः क्रमेण तान्पृष्ठमारोप्य जलाशयस्य नातिदूरे शिलां समासाद्य तस्यामाक्षिप्य स्वेच्छया भक्षयित्वा भूयोऽपि जलाशयं समासाद्य जलचराणां मिथ्यावार्तासंदेशकैर्मनांसि रञ्जयन्नित्यामिवाहारवृत्तिमकरोत् । अन्यस्मिन्दिने स कुलीरकेणोक्तः, माम मया सह प्रथमः स्नेहसंभाषः संजातः । तत्किं मां परित्यज्यान्यान्नयसि । तस्मादद्य मे प्राणत्राणं कुरु । तदाकर्ण्य सोऽपि दुष्टाशयश्चिंतितवान् । निर्विण्णोऽहं मत्स्यमांसादनेन । तदद्यैनं कुलीरकं व्यंजनस्थाने करोमि। इति विचिंत्य तं पृष्ठं समारोप्य तां वध्यशिलामुद्दिश्य प्रस्थितः । कुली-

रकोऽपि दूरादेवास्थिपर्वतं शिलाश्रयमवलोक्य मत्स्यास्थीनि परिज्ञाय तमपृच्छत् । माम कियद्दूरे स जलायशः । मदीयभारेणातिश्रांतस्त्वं । तत्कथय । सोऽपि मंदधीर्जलचरोऽयमिति मत्वा स्थले न प्रभवतीति सस्मितमिदमाह । कुलीरक कुतोऽन्यो जलाशयः । मम प्राणयात्रेयम् । तस्मात्स्मर्यतामात्मनोऽभीष्टदेवता । त्वामप्यस्यां शिलायां निक्षिप्य भक्षयिष्यामि । इत्युक्तवति तस्मिन्स्ववदनदंशद्वयेन मृणालनालधवलायां मृदुग्रीवायां गृहीतो मृतश्च । अथ स तां बकग्रीवां समादाय शनैः शनैस्तज्जलाशयमाससाद । ततः सर्वैरेव जलचरैः पृष्टः । भोः कुलीरक किंनिमित्तस्त्वं पश्चादायातः । कुशलकारणं तिष्ठति । स मातुलोऽपि नायातः । तत्किं चिरयसि । वयं सर्वे सोत्सुकाः कृतक्षणास्तिष्ठामः । एवं तैरभिहिते कुलीरकोऽपि विहस्योवाच । मूर्खाः सर्वे जलचरास्तेन मिथ्यावादिना वंचयित्वा नातिदूरे शिलातले प्रक्षिप्य भक्षिताः । तन्ममायुःशेषतया तस्य विश्वासघातकस्याभिप्रायं ज्ञात्वा ग्रीवेयमानीता । तदलं संभ्रमेण । अधुना सर्वजलचराणां क्षेमं भविष्यति ।

पञ्चतंत्रम् ।

---

## २१. रघुवंशस्य प्रस्तावना ।

वागर्थाविव संपृक्तौ वागर्थप्रतिपत्तये ।
जगतः पितरौ वंदे पार्वतीपरमेश्वरौ ॥ १
क्व सूर्यप्रभवो वंशः क्व चाल्पविषया मतिः ।
तितीर्षुर्दुस्तरं मोहादुडुपेनास्मि सागरम् ॥ २
मंदः कवियशःप्रार्थी गमिष्याम्युपहास्यताम् ।
प्रांशुलभ्ये फले लोभादुद्बाहुरिव वामनः ॥ ३
अथवा कृतवाग्द्वारे वंशेऽस्मिन्पूर्वसूरिभिः ।
मणौ वज्रसमुत्कीर्णे सूत्रस्येवास्ति मे गतिः ॥ ४

सोऽहमाजन्मशुद्धानामाफलोदयकर्मणाम् ।
आसमुद्रक्षितीशानामानाकरथवर्त्मनाम् ॥ ५
यथाविधिहुताग्नीनां यथाकामार्चितार्थिनाम् ।
यथापराधदंडानां यथाकालप्रबोधिनाम् ॥ ६
त्यागाय संभृतार्थानां सत्याय मितभाषिणाम् ।
यशसे विजिगीषूणां प्रजायै गृहमेधिनाम् ७
शैशवेऽभ्यस्तविद्यानां यौवने विषयैषिणाम् ।।
वार्द्धके मुनिवृत्तीनां योगेनांते तनुत्यजाम् ॥ ८
रघूणामन्वयं वक्ष्ये तनुवाग्विभवोऽपि सन् ।
तद्गुणैः कर्णमागत्य चापलाय प्रचोदितः ॥ ९
तं सन्तः श्रोतुमर्हन्ति सदसद्व्यक्तिहेतवः ।
हेम्नः सँल्लक्ष्यते ह्यग्नौ विशुद्धिः श्यामिकाऽपि वा ॥ १०

रघुवंशम् ।

---

## ३२. वेणीसंहारमहोत्सवः ।

( नेपथ्ये )

भो भोः समन्तपंचकसंचारिणो योधाः कृतमस्मद्दर्शनत्रासेन । कथयत कस्मिन्नुद्देशे याज्ञसेनी सन्निहिता ।

**युधिष्ठिरः**—( सहसोत्थाय ) पाञ्चालि न भेतव्यं न भेतव्यम् । उपानीयतां मे सज्यं धनुः । दुरात्मन् दुर्योधनहतक, आगच्छ । अपनयामि ते गदाकौशलसम्भूतं भुजदर्पं शिलीमुखासारेण ।

( ततः प्रविशति गदापाणिः क्षतजसिक्तसर्वांगो भीमसेनः )

**भीमसेनः**—( उद्धतं परिक्रामन् ) भो भोः समन्तपञ्चकसञ्चारिणः सैनिकाः । कोऽयमावेगः ।

रक्षो नाहं न भूतं रिपुरुधिरजलप्लाविताङ्गः प्रकामं
निस्तीर्णोरुप्रतिज्ञाजलनिधिगहनः क्रोधनः क्षत्रियोऽस्मि ।
भो भो राजन्यवीराः समरशिखिशिखादग्धशेषाः कृतं व-
स्त्रासेनानेन लीनैर्हतकरितुरगान्तर्हितैरास्यते किम् ॥ १

**युधिष्ठिरः**—कः कोऽत्र भोः । सनिषङ्गं धनुरुपनय । कथं न कश्चित् परिजनः । भवतु बाहुद्वयेनैव दुरात्मानं गाढमालिङ्ग्य ज्वलनमभिपातयामि ( परिकरं बध्नाति )

**द्रौपदी**—( भयात् परिक्रामति )

**भीमः**—तिष्ठ तिष्ठ भीरु क्वाधुना गम्यते । ( इति केशेषु ग्रहीतुमिच्छति )

**युधिष्ठिरः**—( भीमं निष्ठुरमालिङ्ग्य ) दुरात्मन् भीमार्जुनशत्रो सुयोधनहतक,

आशैशवादनुदिनं जनितापराधः क्षीबो मदेन सुजयोर्हत राजपुत्र ।
आसाद्य मेऽन्तरमिदं भुजपञ्जरस्य,जीवन् प्रयासि न पदात्पदमद्य पाप ॥२

**भीमः**—अये कथमार्यः सुयोधनशङ्कया निर्दयं मामालिङ्गति ।

**कञ्चुकी**—( उपगम्य सहर्षम् ) महाराज वंच्यसे । अयं खल्वायुष्मान् भीमसेनः सुयोधनक्षतजारुणितसकलशरीराम्बरो दुर्लक्ष्यव्यक्तिः । अलमधुना सन्देहेन ।

**चेटी**—( द्रौपदीमालिङ्ग्य ) देवि पूरितप्रतिज्ञाभरो नाथो देव्या वेणीसंहारं कर्तुं त्वामन्वेषयति ।

**द्रौपदी**—हञ्जे किं मामलीकवचनैराश्वासयसि ।

**कञ्चुकी**—महाराज वंच्यसे ।

**युधिष्ठिरः**—जयन्धर, अपि सत्यं नायं मम वैरी सुयोधनहतकः ।

**भीमः**—देव, अजातशत्रो कुतोऽद्यापि सुयोधनहतकः ।

भूमौ क्षिप्तं शरीरं निहितमिदमसृक्चन्दनं भीमगात्रे
लक्ष्मीरार्ये विषण्णा चतुरुदधिपयःसीमया सार्धमुर्व्या ।
भृत्या मित्राणि योधाः कुरुकुलमखिलं दग्धमेतद्रणाग्नौ
नामैकं यद्ब्रवीषि क्षितिप तदधुना धार्तराष्ट्रस्य शेषम् ॥३

**युधिष्ठिरः**—( वैरं मुक्त्वा भीममवलोकयन्नश्रूणि मार्जयति )

**भीमः**—( पादयोः पतित्वा ) जयत्वार्यः ।

**युधिष्ठिरः**—वत्स बाष्पजलांतारितनयनत्वान्न पश्यामि ते मुखचन्द्रम् । तत्कथय कच्चिज्जीवति भवान् समं किरीटिना ।

**भीमः**—निहतसकलरिपुपक्षे त्वयि नराधिपे जीवति भीमोऽर्जुनश्च

**युधिष्ठिरः**—(सस्नेहं पुनर्गाढमालिङ्गति )

**भीमः**—आर्य मुञ्चतु मां क्षणमेकं भवान् ।

**युधिष्ठिरः**—किमपरमवशिष्टम् ।

**भीमः**—आर्य सुमहदवशिष्टम् । संयच्छामि तावदनेन दुर्योधनदुःशासनरुधिरोक्षितेन पाणिना पाञ्चाल्या दुःशासनावकृष्टं केशहस्तम् ।

**युधिष्ठिरः**—सत्वरं गच्छतु भवान् । अनुभवतु तपस्विनी वेणीसंहारमहोत्सवम् ।

**भीमः**—भवति पाञ्चालराजकन्ये दिष्टया वर्धसे रिपुकुलक्षयेण ।

**द्रौपदी**—( उपसृत्य ) जयतु जयतु नाथः । ( भयादपसर्पति )

**भीमः**—राजपुत्रि अलमेवं मामवलोक्य त्रासेन । पश्य

येनाकृष्टासि राज्ञां सदसि नृपशुना तेन दुःशासनेन
स्त्यानान्येतानि तस्य स्पृश मम करयोः पीतशेषाण्यसृञ्जि ।
कान्ते राज्ञः कुरूणामपि रुधिरमिदं मद्गदाचूर्णितोरो-
रङ्गेष्वङ्गेषु सक्तं तव परिभवजस्यानलस्योपशान्त्यै ॥

बुद्धिमतिके क सम्प्रति भानुमती योपहसति पाण्डवदारान् । वेदिसम्भवे याज्ञसेनि ।

**द्रौपदी**—आज्ञापयतु नाथः ।

**भीमः**—स्मरति वा भवती यन्मया प्रतिज्ञातमासीत् ।

**द्रौपदी**—नाथ स्मरामि अनुभवामि च ।

**भीमः**—संयम्यतामिदानीं धार्तराष्ट्रकुलकालरात्रिर्दुःशासनविलुलिता वेणी ।

**द्रौपदी**—नाथ विस्मृतास्म्येतं व्यापारम् । नाथस्य प्रसादेन पुनरपि शिक्षिष्ये ।

**चेटी**—वेणीं बध्नाति ।

( नेपथ्ये ) कृष्णायाः केशपाशः कुपितयमसखो धूमकेतुः कुरूणां
सोऽयं बद्धः प्रजानां विरमतु निधनं स्वस्ति राज्ञां कुलेभ्यः ॥

**युधिष्ठिरः**—देवि एष त वेणीसंहारोऽभिनन्द्यते नभस्तलसञ्चारिणा सिद्धजनेन ।

वेणीसंहारम्.

---

## ३३. गृध्रेणाक्षिप्तः सङ्गमनीयो मणिः ।

( ततः प्रविशति हृष्टो विदूषकः )

**विदूषकः**—दिष्ट्या चिरस्य कालस्योर्वशीसहायो नन्दनवनप्रमुखेषु देवतारण्येषु विहृत्य प्रतिनिवृत्तः प्रियवयस्यः। इदानीं स सत्कारोपचारैः प्रकृतिभिरनुरज्यमानो राज्यं करोति । असन्तानत्वं वर्जयित्वा न किमप्यस्य हीनम् । अद्य तिथिविशेष इति भगवत्योर्गङ्गायमुनयोः सङ्गमे देवीभिः सह कृताभिषेकः साम्प्रतमुपकार्यां प्रविष्टः । तद्यावदत्रभवतोऽलंक्रियमाणस्यानुलेपनमाल्यभागी भवामि ।

[ नेपथ्ये ]

हा धिक् । हा धिक् । दुकूलोत्तरच्छदे तालवृन्ताधारे निक्षिप्य

नीयमानो मया भर्तुरभ्यन्तरविलासिनीमौलिरत्नयोग्यो मणिरामिषशङ्किना गृध्रेणाक्षिप्तः ।

**विदूषकः**—( कर्णं दत्त्वा ) अत्याहितम् । परं बहुमतः खलु स वयस्यस्य सङ्गमनीयो नाम चूडामणिः । अतः खल्वसमाप्तनेपथ्यस्तत्र-भवानासनादुत्थायेत एवागच्छति यावदेनमुपसर्पामि ।

( ततः प्रविशति सावेगपरिजनो राजा )

**राजा**—आत्मनो वधमाहर्ता क्वासौ विहगतस्करः ।
येन तत् प्रथमं स्तेयं गोप्तुरेव गृहे कृतम् ॥ १

**किराती**—एष एष खलु मुखकोटिलग्नहेमसूत्रेण मणिना आलिखन्निवाकाशं परिभ्रमति ।

**राजा**—पश्याम्येनम् ।

असौ मुखालम्बितहेमसूत्रं, बिभ्रन्मणिं मण्डलचारशीघ्रः ।
अलातचक्रप्रतिमं विहंगस्तद्रागरेखावलयं तनोति ॥ २

किं नु खलु कर्तव्यम् ।

**विदूषकः**—( उपेत्य ) अलमत्र घृणया । अपराधी शासनीयः ।

**राजा**—सम्यगाह भवान् । धनुर्धनुस्तावत् ।

( निष्क्रान्ता धनुर्ग्राहिणी यवनी )

**राजा**—वयस्य न दृश्यते विहङ्गः ।

**विदूषकः**—इतो दक्षिणान्तेनापगतः शासनीयः कुणपभोजनः ।

**राजा**—( परिवृत्यावलोक्य ) दृष्ट इदानीम् ।

प्रभापल्लवितेनासौ करोति मणिना खगः ।
अशोकस्तबकेनेव दिङ्मुखस्यावतंसकम् ॥ ३

[ प्रविश्य चापहस्ता यवनी ]

**यवनी**—भर्तः, एतद्धस्तावापसहितं शरासनम् ।

**राजा**—किमिदानीं धनुषा । बाणपथमतीतः क्रव्यभोजनः । तथाहि

आभाति मणिविशेषो दूरमिदानीं पतत्रिणा नीतः ।
नक्तमिव लोहिताङ्गः परुषघनच्छेदसंयुक्तः ॥ ४

[ कञ्चुकिनं विलोक्य ] लातव्य मद्वचनादुच्यतां नागरिकः सोयं निवासवृक्षाश्रयी विचीयतां विहगदस्युरिति ।

**कञ्चुकी**—यदाज्ञापयति देवः ।

[ इति निष्क्रान्तः ]

**विदूषकः**—उपविशतु भवान् सांप्रतम् । क गतः स रत्नकुम्भीरको भवतः शासनान्मोक्ष्यते ।

**राजा**—[ विदूषकेण सहोपविश्य ]

रत्नमिति न मम तस्मिन् मणौ प्रियत्वं विहङ्गमाक्षिप्ते ।
प्रियया तेनास्मि सखे सङ्गमनीयेन सङ्गमितः ॥ ५

**विदूषकः**–ननु परिगतार्थोऽस्मि कृतो भवता ।

[ ततः प्रविशति सशरं मणिमादाय कञ्चुकी ]

**कञ्चुकी**—जयतु जयतु देवः ।

अनेन निर्भिन्नतनुः स वध्यो बलेन ते मार्गणतां गतेन ।
प्राप्यापराधोचितमन्तरिक्षात् समौलिरत्नः पतितः पतत्री ॥ ६

[ सर्वे विस्मयं रूपयन्ति ]

**कञ्चुकी**–अद्भिः प्रक्षालितो मणिः कस्मै प्रदीयताम् ।

**राजा**—किराति, अग्निशुद्धमेनं कृत्वा पेटकं प्रवेशय ।

**किराती**–यद्भर्ताज्ञापयति [इति मणिं गृहीत्वा निष्क्रान्ता ]

विक्रमोर्वशीयम् ।

---

## ३४. धिगियं दरिद्रता।

**चारुदत्तः**–( ऊर्ध्वमवलोक्य सनिर्वेदं निःश्वस्य )

यासां बलिः सपदि मृद्गृहदेहलीनां हंसैश्च सारसगणैश्च विलुप्तपूर्वः।
तास्वेव संप्रति विरूढतृणांकुरासु बीजाञ्जलिः पतति कीटमुखावलीढः १

[ इति मन्दं मन्दं परिक्रम्योपविशति ]

[ प्रविश्य ]

**विदूषकः**—स्वस्ति भवते, वर्धतां भवान्।

**चारुदत्तः**–अये सर्वकालमित्रं मैत्रेयः प्राप्तः। सखे स्वागतम्। आस्यताम्।

**विदूषकः**—यद्भवानाज्ञापयति। भो वयस्य एष ते प्रियवयस्येन जूर्णवृद्धेन जातीकुसुमवासितः प्रावारकोऽनुप्रेषितः सिद्धीकृतदेवकार्यस्यार्यचारुदत्तस्य त्वयोपनेतव्य इति।

[ चारुदत्तो गृहीत्वा सचिन्तः स्थितः ]

**विदूषकः**–भोः किमिदं चिन्तयसि।

**चारुदत्तः**–वयस्य

सुखं हि दुःखान्यनुभूय शोभते, घनान्धकारेष्विव दीपदर्शनम्।
सुखात्तु यो याति नरो दरिद्रतां, धृतः शरीरेण मृतः स जीवति॥२

**विदूषकः**–भो वयस्य मरणाद्दारिद्र्याद्वा कतरत्ते रोचते।

**चारुदत्तः**—वयस्य

दारिद्र्यान्मरणाद्वा मरणं मम रोचते न दारिद्र्यम्।
अल्पक्लेशं मरणं दारिद्र्यमनंतकं दुःखम्॥ ३

**विदूषकः**–भो वयस्य अलं संतापितेन। प्रणयिजनसंक्रामितविभवस्य सुरजनपीतशेषस्य प्रतिपच्चंद्रस्येव परिक्षयोऽपि तेऽधिकतररमणीयः

**चारुदत्तः**–वयस्य न ममार्थान्प्रति दैन्यम्। पश्य

एतत्तु मां दहति यद् गृहमस्मदीयं क्षीणार्थमित्यतिथयः परिवर्जयंति ।
संशुष्कसांद्रमदलेखमिव भ्रमंतः कालात्यये मधुकराः करिणः कपोलम् ॥ ४

**विदूषकः**–भो वयस्य, एते खलु दास्याः पुत्रा अर्थकल्यवर्ता वरटाभीता इव गोपालदारका अरण्ये यत्र यत्र न खाद्यंते तत्र तत्र गच्छंति ।

**चारुदत्तः**–वयस्य,

सत्यं न मे विभवनाशकृतास्ति चिंता ।
भाग्यक्रमेण हि धनानि भवन्ति यांति ।
एतत्तु मां दहति नष्टधनाश्रयस्य ।
यत्सौहृदादपि जनाः शिथिलीभवंति ॥ ५

अपि च,

दारिद्र्याद् ह्रियमेति ह्रीपरिगतः प्रभ्रश्यते तेजसो
निस्तेजाः परिभूयते परिभवान्निर्वेदमापद्यते ।
निर्विण्णः शुचमेति शोकपिहितो बुद्ध्या परित्यज्यते
निर्बुद्धिः क्षयमेत्यहो निधनता सर्वापदामास्पदम् ॥ ६

**विदूषकः**–भो वयस्य तमेवार्थकल्यवर्तं स्मृत्वा, अलं संतापितेन ॥

**चारुदत्तः**–वयस्य दारिद्र्यं हि पुरुषस्य

निवासश्चिंतायाः परपरिभवो वैरमपरं
जुगुप्सा मित्राणां स्वजनजनविद्वेषकरणम् ।
वनं गंतुं बुद्धिर्भवति च कलत्रात्परिभवो
हृदिस्थः शोकाग्निर्न च दहति संतापयति च ॥ ७

मृच्छकटिकम् ।

---

## ३५. श्रावणवधवृत्तान्तः ।

अथ जातु रुरोर्गृहीतवर्त्मा, विपिने पार्श्वचैररलक्ष्यमाणः ।
श्रमफेनमुचा तपस्विगाढां, तमसां प्राप नदीं तुरङ्गमेण ॥ १

कुम्भपूरणभवः पटुरुच्चैरुच्चचार निनदोऽम्भसि तस्याः ।
तत्र स द्विरदबृंहितशङ्की, शब्दपातिनमिषुं विससर्ज ॥ २

नृपतेः प्रतिषिद्धमेव तत्, कृतवान् पङ्क्तिरथो विलङ्घ्य यत् ।
अपथे पदमर्पयन्ति हि, श्रुतवन्तोऽपि रजोनिमीलिताः ॥ ३

हा तातेति क्रन्दितमाकर्ण्य विषण्णस्तस्यान्विष्यन्वेतसगूढं प्रभवं सः ।
शल्यप्रोतं प्रेक्ष्य सकुम्भं मुनिपुत्रं,तापादन्तःशल्य इवासीत् क्षितिपोऽपि ॥
तेनावतीर्य तुरगात् प्रथितान्वयेन, पृष्टान्वयः स जलकुम्भनिषण्णदेहः ।
तस्मै द्विजेतरतपस्विसुतं स्खलद्भिरात्मानमक्षरपदैः कथयांबभूव ॥ ५
तच्चोदितश्च तमनुद्धृतशल्यमेव, पित्रोः सकाशमवसन्नदृशोर्निनाय ।
ताभ्यां तथागतमुपेत्य तमेकपुत्रमज्ञानतः स्वचरितं नृपतिः शशंस ॥ ६
तौ दम्पती बहु विलप्य शिशोः प्रहर्त्रा शल्यं निखातमुदहारयतामुरस्तः ।
सोऽभूत् परासुरथ भूमिपतिं शशाप हस्तार्पितैर्नयनवारिभिरेव वृद्धः ॥
दिष्टान्तमाप्स्यति भवानपि पुत्रशोकादन्त्ये वयस्यहमिवेति तमुक्तवन्तम् ।
आक्रान्तपूर्वमिव मुक्तविषं भुजंगं, प्रोवाच कोसलपतिः प्रथमापराद्धः॥ ८
शापोऽप्यदृष्टतनयाननपद्मशोभे सानुग्रहो भगवता मयि पातितोऽयम् ।
कृष्यां दहन्नपि खलु क्षितिमिन्धनेद्धो बीजप्ररोहजननीं ज्वलनः करोति॥
इत्थं गते गतघृणः किमयं विधत्तां वध्यस्तवेत्यभिहितो वसुधाधिपेन ।
एधान् हुताशनवतः स मुनिर्ययाचे पुत्रं परासुमनुगन्तुमनाः सदारः॥ १०

रघुवंशम् ।

———

## ३६ विग्रहः ।

### ( प्रथमः परिच्छेदः )

अस्ति कर्पूरद्वीपे पद्मकेलिनामधेयं सरः । तत्र हिरण्यगर्भो नाम राजहंसः प्रतिवसति । स च सर्वैर्जलचरपक्षिभिर्मिलित्वा पक्षिराज्येऽभिषिक्तः । एकदासौ राजहंसः सुविस्तीर्णकमलपर्यङ्के सुखासीनः परिवारपरिवृतास्तिष्ठति । ततः कुतश्चिद्देशादागत्य दीर्घमुखो नाम बकः प्रणम्योपविष्टः । राजोवाच दीर्घमुख, देशान्तरादागतोऽसि । वार्तां कथय । स ब्रूते-देव । अस्ति महती वार्ता । तामाख्यातुकाम एव सत्वरमागतोऽहम् । श्रूयताम् ।

अस्ति जम्बुद्वीपे विन्ध्यो नाम गिरिः । तत्र चित्रवर्णो नाम मयूरः पक्षिराजो निवसति । तस्यानुचरैश्चरद्भिः पक्षिभिरहं दग्धारण्यमध्ये चरन्नवलोकितः पृष्टश्च । कस्त्वं । कुतः समायातोऽसि । तदा मयोक्तम् । कर्पूरद्वीपस्य राजचक्रवर्तिनो हिरण्यगर्भस्य राजहंसस्यानुचरोऽहम् । कौतुकाद्देशान्तरं द्रष्टुमागतोऽस्मि । एतच्छ्रुत्वा पक्षिभिरुक्तम्—अनयोर्देशयोः को देशो भद्रतरो राजा च । मयोक्तम्, आः किमेवमुच्यते । महदन्तरम् । यतः कर्पूरद्वीपः स्वर्ग एव । राजहंसश्च द्वितीयः स्वर्गपतिः । अत्र मरुस्थले पतिता यूयं किं कुरुथ । आगच्छतास्मद्देशम् । गम्यताम् । ततोऽस्मद्वचनमाकर्ण्य सर्वे सकोपा बभूवुः । राजोवाच—ततस्तैः किं कृतम् । बकः कथयति—ततस्तैः पक्षिभिः कोपादुक्तम् । केनासौ राजहंसः कृतो राजा । ततो मयोपजातकोपेनोक्तम् । युष्मदीयमयूरः केन राजा कृतः । एतच्छ्रुत्वा ते सर्वे मां हन्तुमुद्यताः । ततो मयापि स्वविक्रमो दर्शितः । ततस्तैः पक्षिभिरुक्तम् । अरे पाप बक । अस्माकं भूमौ चरन्नस्माकं स्वामिनमधिक्षिपासि तन्न गन्तव्यमिदानीम् । इत्युक्त्वा ते सर्वे मां चंचुभि-

ईत्वा सकोपा ऊचुः । पश्य रे मूर्ख । हंसस्तव राजा सर्वथा मृदुः । तस्य राज्येऽधिकार एव नास्ति । यत एकान्ततो मृदुः करतलगतमप्यर्थं रक्षितुमक्षमः । कथं स पृथिवीं शास्ति । राज्यं वा तस्य किम् । त्वं च कूपमण्डूकस्तेन तदाश्रयमुपदिशसि । मयोक्तम् । स एवास्मत्प्रभू राजहंसो महाप्रतापोऽतिसमर्थः । त्रैलोक्यस्यापि प्रभुत्वं तत्र युज्यते किमुत राज्यम् । तदहं तैः पक्षिभिर्दुष्ट कथमस्मद्भूमौ चरसीत्यभिधाय राज्ञश्चित्रवर्णस्य समीपं नीतः । ततो राज्ञः पुरो मां प्रदर्श्य तैः प्रणम्योक्तम् । देव अवधीयतामेष दुष्टो बको यदस्मद्देशे चरन्नपि देवपादानधिक्षिपति । राजाऽऽह—कोऽयम् । कुतः समागतः । त ऊचुः । हिरण्यगर्भनाम्नो राजहंसस्यानुचरः कर्पूरद्वीपादागतः । अथाहं गृध्रेण मन्त्रिणा पृष्टः । कस्तत्र मुख्यो मन्त्रीति । मयोक्तम् । । सर्वशास्त्रार्थपारगः सर्वज्ञो नाम चक्रवाकः । गृध्रो ब्रूते । युज्यते । स्वदेशजोऽसौ । अत्रान्तरे शुकेनोक्तम् । देव कर्पूरद्वीपादयो लघुद्वीपा जम्बुद्वीपान्तर्गता एव । तत्रापि देवपादानामेवाधिपत्यम् । ततो राज्ञाप्युक्तम् । एवमेव । ततो मयोक्तम् । यदि वचनमात्रेणैवाधिपत्यं सिध्यति तदा जम्बुद्वीपेऽप्यस्मत्प्रभोर्हिरण्यगर्भस्य स्वाम्यमस्ति । शुक उवाच । कथमत्र निर्णयः । मयोक्तम् । संग्राम एव । राज्ञा विहस्योक्तम् । स्वस्वामिनं गत्वा सज्जीकुरु । तदा मयोक्तम् । स्वदूतोऽपि प्रस्थाप्यताम् । राजोवाच—कः प्रयातु दौत्येन । गृध्रो वदति । सन्त्येव दूता बहवः । किन्तु ब्राह्मण एव कर्तव्यः । राजाऽऽह—ततः शुक एव व्रजतु । शुक त्वमेवानेन सह गत्वाभिलषितं ब्रूहि । शुको ब्रूते—यथाज्ञापयति देवः । किन्त्वयं दुर्जनो बकः । तदनेन सह न गच्छामि । ततो मयोक्तम् । भ्रातः शुक किमेवं ब्रवीषि । मां प्रति यथा श्रीमद्देवपादास्तथा भवानपि । शुकेनोक्तम् । अस्त्वेवं किन्तु दुर्जनत्वं च भवतो वाक्यादेव ज्ञातम् । यदनयोर्भूपालयोर्विग्रहे भवद्वचनमेव निदानम् । ततोऽहं तेन

राज्ञा यथाव्यवहारं संपूज्य प्रस्थापितः। शुकोऽपि मम पश्चादागच्छन्नास्ते। एतत्सर्वं परिज्ञाय यथाकर्तव्यमनुसन्धीयताम्।

( द्वितीयः परिच्छेदः )

चक्रवाको विहस्याह-देव बकेन तावद्देशान्तरमपि गत्वा यथाशक्ति राजकार्यमनुष्ठितम्। किन्तु देव स्वभाव एष मूर्खाणाम्। यतो विना हेतुमपि द्वन्द्वमस्य सम्मतम्। राजाऽऽह—किमतीतोपालम्भनेन। प्रस्तुतमनुसन्धीयताम्। चक्रवाको ब्रूते-देव विजने ब्रवीमि। यतो रहसि मन्त्रः कार्यः। राजा मन्त्री च तत्र स्थितौ। अन्येऽन्यत्र गताः। चक्रवाको ब्रूते—देव अहमेवं जानामि कस्याप्यस्मन्नियोगिनः प्रेरणया बकेनेदमनुष्ठितम्। राजाह भवतु। कारणमत्र पश्चान्निरूपणीयम्। संप्रति यत्कर्तव्यं तन्निरूप्यताम्। चक्रवाको ब्रूते—देव प्रणिधिस्तावत्तत्र यातु। ततस्तदनुष्ठानं बलाबलं च जानीमः। तथाहि। स्वपरराष्ट्राणां कार्याकार्यावलोकने यस्य महीभर्तुश्चारचक्षुर्न भवेत् सोऽन्ध एव। स च द्वितीयं विश्वासपात्रं गृहीत्वा यातु। तेनासौ स्वयं तत्रावस्थाय द्वितीयं तत्रत्यमन्त्रकार्यं सुनिभृतं निश्चित्य निगद्य प्रस्थापयति। गूढचारश्च यो जले स्थले चरति ततोऽसावेव बको नियुज्यताम्। एतादृश एव कश्चिद्बको द्वितीयत्वेन प्रयातु तद्गृहलोकश्च राजद्वारे तिष्ठतु। किन्तु देव, एतदपि सुगुप्तमनुष्ठातव्यम्। यतो भिद्यते षट्कर्णो मन्त्रः। राजा विमृश्योवाच। प्राप्तस्तावन्मयोत्तमः प्रणिधिः। मन्त्री ब्रूते— तदा संग्रामविजयोऽपि प्राप्तः। अत्रान्तरे प्रतीहारः प्रविश्य प्रणम्योवाच-देव जम्बुद्वीपादागतो द्वारि शुकस्तिष्ठति। राजा चक्रवाकमवलोकते। चक्रवाकेणोक्तम्—आवासं तावद् गत्वा तिष्ठतु पश्चादानीय द्रष्टव्यः। प्रतीहारस्तमावासस्थानं नीत्वा गतः। राजाह-विग्रहस्तावदुपस्थितः। चक्रवाको ब्रूते-देव तथापि सहसा विग्रहो न विधिः। किन्तु विग्रहमुपस्थितं विलोक्य व्यवह्रियताम्। महाबलोऽसौ चित्रवर्णो राजा। अतस्त-

दूदूतोऽयं शुकोऽत्राश्वास्य तावद् ध्रियतां यावद्दुर्गं सज्जीक्रियते । राजाह, दुर्गसन्धाने को नियुज्यताम् । चक्रो ब्रूते–आहूयतां सारसः । स सत्कार्यकुशलः । तथानुष्ठिते सत्यागतं सारसमवलोक्य राजोवाच–भोः सारस त्वं सत्वरं दुर्गमनुसंदेहि । सारसः प्रणम्योवाच, दुर्गं तावदिदमेव चिरात्सुनिरूपितमास्ते महत्सरः । किन्त्वत्र मध्यवर्तिद्वीपे द्रव्यसंग्रहः कार्यताम् । राजाह सत्वरं गत्वा सर्वमनुतिष्ठ । पुनः प्रविश्य प्रतीहारो ब्रूते-देव सिंहलद्वीपादागतो मेघवर्णो नाम वायसः सपरिवारो द्वारि तिष्ठति देवपादं द्रष्टुमिच्छति । राजाह-काकः पुनः सर्वज्ञो बहुद्रष्टा च । तद्भवति संग्राह्यः । चक्रो ब्रूते--देव अस्त्वेवम् । किन्तु काकः स्थलचरः। तेनास्मद्विपक्षे नियुक्तः कथं संग्राह्यः । राजाह-यद्येवं तथापि दृश्यतां तावदयं दूरादागतः । तत्संग्रहे विचारः कार्यः । चक्रो ब्रूते--देव प्रणिधिः प्रहितो दुर्गश्च सज्जीकृतः । अतः शुकोऽप्यालोक्य प्रस्थाप्यताम् ।

## ( तृतीयः परिच्छेदः )

ततः सभां कृत्वाऽऽहूतः काकश्च । शुकः किञ्चिदुन्नतशिरा दत्तासन उपविश्य ब्रूते-भो हिरण्यगर्भ त्वां महाराजाधिराजः श्रीमाच्चित्रवर्णः समाज्ञापयति । यदि जीवितेन श्रिया वा प्रयोजनमस्ति तदा सत्वरमागत्यास्मच्चरणौ प्रणम । नो चेदवस्थातुं स्थानांतरं चिन्तय । राजा सकोपमाह–आः सभायां कोऽप्यस्माकं नास्ति य एनं गलहस्तयति । उत्थाय मेघवर्णो ब्रूते–देव, आज्ञापय । हन्मि दुष्टं शुकम् । सर्वज्ञो राजानं काकं च सान्त्वयन् ब्रूते–शृणु तावत् । दूतः सर्वदाऽवध्यः । यतो राजा दूतमुखो विद्यते । दूतोक्तैः स्वापकर्षं परोत्कर्षं वा सुधीर्न मन्येत । अवध्यभावेनाकुतोभयो दूतः सर्वं संकीर्तयति । ततो राजा काकश्च स्वां प्रकृतिमापन्नौ । शुकोऽप्युत्थाय चलितः । पश्चाच्चक्रवाकेणानीय प्रबोध्य कनकालङ्कारादिकं दत्त्वा संप्रेषितो ययौ ।

शुको विन्ध्याचलं गत्वा राजानं प्रणतवान् । तमालोक्य चित्रवर्णो राजाह--शुक का वार्ता । कीदृशोऽसौ देशः । शुको ब्रूते, देव संक्षेपादियं वार्ता, संप्रति युद्धोद्योगः क्रियताम् । देशश्चासौ कर्पूरद्वीपः स्वर्गैकदेशः । कथं वर्णयितुं शक्यते । ततः सर्वाञ् शिष्टानाहूय राजा मन्त्रयितुमुपविष्टः । आह च संप्रति कर्तव्यविग्रहे यथाकर्तव्यमुपदेशं ब्रूत । विग्रहः पुनरवश्यं कर्तव्यः । दूरदर्शी नाम गृध्रो ब्रूते--देव व्यसनितया विग्रहो न विधिः । राजाह--मम बलानि तावदवलोकयतु मन्त्री । तदेतेषामुपयोगो ज्ञायताम् । एवमाहूयतां मौहूर्तिकः । निर्णीय शुभलग्नं कार्यार्थं ददातु । मन्त्री ब्रूते--तथापि सहसा यात्राकरणमनुचितम् । राजाह--मन्त्रिन् ममोत्साहभङ्गं सर्वथा मा कृथाः । विजिगीषुर्यथा परभूमिमाक्रामति तथा कथय । गृध्रो ब्रूते--तत् कथयामि । किन्तु तदनुष्ठितमेव फलप्रदम् । राजादेशश्चानतिक्रमणीय इति यथाश्रुतं निवेदयामि । ततो मन्त्री विग्रहपराणि कामन्दकीनीतिशास्त्रवचनानि विस्तरतो व्याचष्ट । ततो राजाह—आः किंः बहुनोदितेन । आत्मोदयः परज्यानिरितिद्वयाद् व्यतिरिक्तो न कश्चिन्नीतिपदार्थोऽस्ति । मन्त्रिणा विहस्योक्तम्—सर्वं सत्यमेतत् । तत उत्थाय राजा मौहूर्तिकावेदितलग्ने प्रस्थितः ।

( चतुर्थः परिच्छेदः )

अथ प्रणिधिप्राहितश्चरो हिरण्यगर्भमागत्य प्रोवाच । देव समागतप्रायो राजा चित्रवर्णः । संप्रति मलयपर्वताधित्यकायां समावासितकटको वर्तते । दुर्गशोधनं प्रतिक्षणमनुसन्धातव्यम् । यतोऽसौ गृध्रो महामन्त्री । किं च केनचित् सह तस्य विश्वासकथाप्रसङ्गेनैव तदिङ्गितमवगतं मया यदनेन कोऽप्यस्मद्दुर्गे प्रागेव नियुक्तः । चक्रो ब्रूते—देव काक एवासौ संभवति । राजाह—न कदाचिदेतत् । यद्येवं तदा कथं तेन शुकस्याभिभवायोद्योगः कृतः । अपरं च । शुकस्य

गमनात्तत्र विग्रहोत्साहः। स चिरादत्रास्ते। मन्त्री ब्रूते तथाप्यागन्तुकः शङ्कनीयः। राजाह—आगन्तुका अपि कदाचिदुपकारका दृश्यन्ते। चक्रवाको ब्रूते—

योऽकार्यं कार्यवच्छास्ति स किंमन्त्री नृपेच्छया॥
वरं स्वामिमनोदुःखं तन्नाशो न त्वकार्यतः॥

राजा वदति—यातु। प्रस्तुतमनुसन्धीयताम्। मलयाधित्यकायां चेच्चित्रवर्णस्तदधुना किं विधेयम्। मन्त्री वदति, देव, आगतप्रणिधिमुखान्मया श्रुतं यन्महामन्त्रिणो गृध्रस्योपदेशे चित्रवर्णेनानादरः कृतः। अतोऽसौ मूढो जेतुं शक्यः। ततोऽसौ यावदस्मद्दुर्गद्वाररोधं न करोति तावन्नद्यद्रिवनवर्त्मसु तद्बलानि हन्तुं सारसादयः सेनापतयो नियुज्यन्ताम्। तस्य प्रमादिनो बलं गत्वा यथावकाशं दिवानिशं घ्नन्त्वस्मत्सेनापतयः। तथानुष्ठिते चित्रवर्णस्य सैनिकाः सेनापतयश्च बहवो निहताः।

( पंचमः परिच्छेदः )

ततश्चित्रवर्णो विषण्णः स्वमन्त्रिणं दूरदर्शिनमाह—तात किमित्यस्मदुपेक्षा क्रियते। किं क्वाप्यविनयो ममास्ति। गृध्रोऽवदत्—देव शृणु। त्वया स्वबलोत्साहमवलोक्य साहसैकरसिना मयोपन्यस्तेष्वपि मन्त्रेष्वनवधानं वाक्पारुष्यं च कृतम्। अतो दुर्नीतेः फलमिदमनुभूयते। समृद्धामपि श्रियं दुर्नयो हन्ति। अथ राजा बद्धाञ्जलिराह—तात, अस्त्ययं ममापराधः। इदानीं यथाहमत्रावशिष्टबलसहितः प्रत्यावृत्य विन्ध्याचलं गच्छामि तथोपदिश। गृध्रः स्वमतं चिन्तयति। क्रियतामत्र प्रतीकारः। विहस्य च ब्रूते—देव मा भैषीः। समाश्वसिहि। भवत्प्रतापादेव दुर्गं भङ्क्त्वा कीर्तिप्रतापसहितं त्वामचिरेण कालेन विन्ध्याचलं नेष्यामि। राजाऽऽह—कथमधुना स्वल्पबलेन तत् संपद्यते। गृध्रो वदति—देव सर्वं भविष्यति। यतो विजिगीषोरदीर्घसूत्रता विजयसिद्धेरवश्यंभावि लक्षणम्। तत्सहसैव दुर्गद्वारावरोधः क्रियतामिति।

अथ प्रणिधिना बकेनागत्य हिरण्यगर्भस्य कथितम् । देव स्वल्पबल एवायं राजा चित्रवर्णो गृध्रस्य मन्त्रोपष्टम्भादागत्य दुर्गद्वारावरोधं करिष्यति । राजहंसो ब्रूते—सर्वज्ञ । किमधुना विधेयम् । चक्रो ब्रूते—स्वबले सारासारविचारः क्रियताम् । तज्ज्ञात्वा सुवर्णवस्त्रादिकं यथार्हं प्रसादप्रदानं क्रियताम् । राजाऽऽह—कथमिहसमयेऽतिव्ययो युज्यते । मन्त्री ब्रूते—कार्पण्यं विमुच्य स्वसुभटा दानमानाभ्यां पुरस्क्रियन्ताम् ।

( षष्ठः परिच्छेदः )

अथागत्य प्रणम्य मेघवर्णो ब्रूते—देव दृष्टिप्रसादं कुरु । एष युद्धार्थी विपक्षो दुर्गद्वारि वर्तते । तद्देवपादादेशाद् बहिर्निःसृत्य स्वविक्रमं दर्शयामि । तेन देवपादानामानृण्यमुपगच्छामि । चक्रो ब्रूते—मैवम् । यदि बहिर्निःसृत्य योद्धव्यं तदा दुर्गाश्रवणमेव निष्प्रयोजनम् । मेघवर्णो वदति-देव स्वयं गत्वा दृश्यतां युद्धम् । यतः स्वामिनाधिष्ठितः श्वाऽपि ध्रुवं सिंहायते । अनन्तरं ते सर्वे दुर्गद्वारं गत्वा महाहवं कृतवन्तः । अपरेद्युश्चित्रवर्णो राजा गृध्रमुवाच । तात स्वप्रतिज्ञातमधुना निर्वाहय । गृध्रो ब्रूते—शृणु तावत् । उपजापश्चिरारोधोऽवस्कन्दस्तीव्रपौरुषमिति चत्वारो दुर्गस्य ग्रहणोपायाः कथिताः । अत्र च यथाशक्ति क्रियते यत्नः । (कर्णे कथयति) एवमेव । ततोऽनुदित एव भास्करे चतुर्ष्वपि दुर्गद्वारेषु प्रवृत्ते युद्धे दुर्गाभ्यन्तरगृहेष्वेकदा काकैरग्निर्निक्षिप्तः । ततो गृहीतं दुर्गं गृहीतं दुर्गमिति कोलाहलं श्रुत्वानेकगृहेषु च प्रदीप्तं पावकं प्रत्यक्षेणावलोक्य राजहंसस्य सैनिकास्तथान्ये दुर्गवासिनः सत्वरं ह्रदं प्रविष्टाः । राजहंसश्च सुखिस्वभावान्मंदगतिः सारसद्वितीयश्च चित्रवर्णस्य सेनापतिना कुक्कुटेनागत्य वेष्टितः । हिरण्यगर्भः सारसमाह—सेनापते ममानुरोधादात्मानं न व्यापादयिष्यसि । गन्तुं त्वमधुनापि समर्थः । तद्गत्वा जलं प्रविश्यात्मानं परिरक्ष । अस्मत्पुत्रं चूडामणिनामानं सर्वज्ञसम्मत्या राजानं करिष्यसि । सारसो ब्रूते—न

वक्तव्यं दुःसहमेवं वचः। यावच्चन्द्रार्कौ दिवि तिष्ठतस्तावद्विजयतां देवः। अहं देव दुर्गाधिकारी। मन्मांसासृग्विलिप्तेन द्वारवर्त्मना प्रविशतु शत्रुः। राजाऽऽह—सत्यमेवैतत्। किन्तु त्वादृशोऽनुरक्तः शुचिर्दक्षश्च भृत्यः सुतरां दुर्लभः। सारस उवाच—देव त्वं च स्वामी सर्वथा रक्षणीयः। अथ कुक्कुटेनागत्य राजहंसस्य शरीरे खरतरनखाघातः कृतः। ततः सत्वरमुपेत्य सारसेन स्वदेहान्तरितो राजा। अनन्तरं कुक्कुटेन नखमुखप्रहारैर्जर्जरीकृतेन सारसेन स्वाङ्गेनाच्छाद्य प्रेर्य राजा जले क्षिप्तः। कुक्कुटसेनापतिश्च चञ्चुप्रहारेण व्यापादितः। पश्चात् सारसोऽपि बहुभिः संभूय व्यापादितः। अथ चित्रवर्णो राजा दुर्गं प्रविश्य तत्रावस्थितं द्रव्यं ग्राहयित्वा बन्दिभिर्जयशब्दैरानन्दितः स्वस्कन्धावारं जगाम।

हितोपदेशः।

---

## ३७. महाश्वेता कादम्बरीजन्मकथां चन्द्रापीडाय निवेदयति।

सा पुनरप्यवादीत्। महाभाग। यत्तन्मया कथितममृतसंभवमप्सरसां कुलं तस्मान्मदिरेति नाम्ना मदिरेक्षणा कन्यकाऽभूत्। तस्याश्चासौ सकलगन्धर्वकुलमुकुटमणिर्देवश्चित्ररथः पाणिमग्रहीत्। अथ कालेनाश्चर्यभूतमेकजीवितमिव पित्रोरथवा सर्वस्यैव गन्धर्वकुलस्य जीवलोकस्य वा दुहितृरत्नमुदपादि कादम्बरीति नाम्ना। सा च मे जन्मनः प्रभृत्येकाशनशयनपानासना परं प्रेमस्थानमखिलविस्रम्भधाम द्वितीयमिव हृदयं बालमित्रम्। एकत्र तया मया च गीतनृत्यकलासु कृताःपरिचयाः। शिशुजनोचिताभिश्च क्रीडाभिरनियन्त्रणमपनीतो बालभावः। सा चामुनैव मदीयेन हतवृत्तान्तेन समुपजातशोका निश्चयमकार्षीत्। नाहं कथंचिद-

पि सशोकायां महाश्वेतायामात्मनः पाणिं ग्राहयिष्यामीति । सखीजनस्य पुरतः सशपथमभिहितवती च, यदि कथमपि मामनिच्छन्तीमपि बलात्तातः कदाचित्कस्मैचिद्दातुमिच्छति तदाहमनशनेन वा हुताशनेन वा रज्ज्वा वा विषेण वा नियतमात्मानमुत्स्रक्ष्यामीति । सर्वं च तदात्मदुहितुः कृतनिश्चयं निश्चलभाषितं परिजनसकाशाद्गन्धर्वराजश्चित्ररथः स्वयमेवाशृणोत् । गच्छति काले समुपारूढनिर्भरयौवनामालोक्य स तां बलवदुपतापपरवशः क्षणमपि न धृतिमलभत । एकापत्यतया चातिप्रियतया चापश्यन्नप्युपायान्तरं न शक्तः किंचिदपि तामभिधातुम् । इदमत्र प्राप्तकालमिति मत्वा तया महादेव्या मदिरया सहावधार्य क्षीरोदनामानं कञ्चुकिनं वत्से महाश्वेते त्वद्व्यतिरेकेणैव दग्धहृदयानामिदमपरमस्माकमुपस्थितम् । इदानीं तु कादम्बरीमनुनेतुं त्वं शरणमिति संदिश्य मत्समीपं प्रत्युषसि प्रेषितवान् । ततो मया गुरुवचनगौरवेण सखीप्रेम्णा च क्षीरोदेन सार्धं सा तरलिका सखि कादम्बरि कथं दुःखितमपि जनमतितरां दुःखयसि । जीवन्तीमिच्छसि चेन्मां तत्कुरु गुरुवचनमवितथमिति संदिश्य विसर्जिता । नातिचिरं गतायां च तस्यामनन्तरमेवेमां भूमिमनुप्राप्तो महाभागः ।

कादम्बरी ।

---

## ३८. हिमालयवर्णनम् ।

अस्त्युत्तरस्यां दिशि देवतात्मा, हिमालयो नाम नगाधिराजः ।
पूर्वापरौ तोयनिधी वगाह्य, स्थितः पृथिव्या इव मानदण्डः ॥ १
यं सर्वशैलाः परिकल्प्य वत्सं, मेरौ स्थिते दोग्धरि दोहदक्षे ।
भास्वन्ति रत्नानि महौषधीश्च, पृथूपदिष्टां दुदुहुर्धरित्रीम् ॥ २
अनन्तरत्नप्रभवस्य यस्य, हिमं न सौभाग्यविलोपि जातम् ।
एको हि दोषो गुणसन्निपाते, निमज्जतीन्दोः किरणेष्विवाङ्कः ॥ ३

यश्चाप्सरोविभ्रममण्डनानां, सम्पादयित्रीं शिखरैर्बिभर्ति ।
बलाहकच्छेदविभक्तरागामकालसन्ध्यामिव धातुमत्ताम् ॥ ४

आमेखलं सञ्चरतां घनानां, छायामधःसानुगतां निषेव्य ।
उद्वेजिता वृष्टिभिराश्रयन्ते, शृङ्गाणि यस्यातपवन्ति सिद्धाः ॥ ५

पदं तुषारस्रुतिधौतरक्तं, यस्मिन्नदृष्ट्वापि हतद्विपानाम् ।
विन्दन्ति मार्गं नखरन्ध्रमुक्तैर्मुक्ताफलैः केसरिणां किराताः ॥ ६

न्यस्ताक्षरा धातुरसेन यत्र, भूर्जत्वचः कुञ्जरबिन्दुशोणाः ।
व्रजन्ति विद्याधरसुन्दरीणामनङ्गलेखक्रिययोपयोगम् ॥ ७

यः पूरयन् कीचकरन्ध्रभागान्, दरीमुखोत्थेन समीरणेन ।
उद्गास्यतामिच्छति किन्नराणां, तानप्रदायित्वमिवोपगन्तुम् ॥ ८

कपोलकण्डूः करिभिर्विनेतुं, विघट्टितानां सरलद्रुमाणाम् ।
यत्र स्रुतक्षीरतया प्रसूतः, सानूनि गन्धः सुरभीकरोति ॥ ९

दिवाकराद्रक्षति यो गुहासु, लीनं दिवाभीतमिवान्धकारम् ।
क्षुद्रेऽपि नूनं शरणं प्रपन्ने, ममत्वमुच्चैःशिरसामतीव ॥ १०

लाङ्गूलविक्षेपविसर्पिशोभैरितस्ततश्चन्द्रमरीचिगौरैः ।
यस्यार्थयुक्तं गिरिराजशब्दं, कुर्वन्ति बालव्यजनैश्चमर्यः ॥ ११

भागीरथीनिर्झरसीकराणां, वोढा मुहुःकम्पितदेवदारुः ।
यद्वायुरन्विष्टमृगैः किरातैरासेव्यते भिन्नशिखण्डिबर्हः ॥ १२

सप्तर्षिहस्तावचितावशेषाण्यधो विवस्वान् परिवर्तमानः ।
पद्मानि यस्याग्रसरोरुहाणि, प्रबोधयत्यूर्ध्वमुखैर्मयूखैः ॥ १३

कुमारसम्भवम् ।

---

## ३९. वैशम्पायनः शुको जन्मनः प्रभृति जाबालिदर्शनं यावदात्मनः कथां शूद्रकाय राज्ञे कथयति ।

( जन्मस्थाननिर्देशः )

अस्ति मध्यदेशालङ्कारभूता मेखलेव भुवो मुनिजनसेविता पवित्रा विन्ध्याटवी नाम । तस्यां च दण्डकारण्यान्तःपाति सकलभुवनविख्यातं भगवतो महामुनेरगस्त्यस्याश्रमपदमासीत् । तस्य नातिदूरेऽपर इव जलनिधिर्वेधसा निष्पादितोऽप्रतिममपां निधानं पम्पाभिधानं पद्मसरः । तस्य सरसः पश्चिमे तीरे जलधरपटलैरप्यदृष्टशिखरस्तुङ्गतया नन्दनवनश्रियमिवालोकयितुमुद्यतोऽधिपतिरिव दण्डकारण्यस्य नायक इव सर्व वनस्पतीनां सखेव विन्ध्यस्य शाखाबाहुभिरुपगुह्येव विन्ध्याटवीं स्थितो महाञ्जीर्णः शाल्मलीवृक्षः । तस्य कोटरोदरेषु विरचितकुलायसहस्राणि नानादेशसमागतानि शकुनिकुलानि प्रतिवसंति स्म । पक्षिणस्ते तस्मिन्नतिवाह्यातिवाह्य निशामात्मनीडेषु प्रतिदिनमुत्थायोत्थायाहारान्वेषणाय नभसि विरचितपंक्तयः सेन्द्रायुधमिवान्तरिक्षमादधाना विचरन्ति स्म । कृताहाराश्च पुनः प्रतिनिवृत्यात्मकुलायावस्थितेभ्यः शावकेभ्यो विविधान् फलरसान् कलममञ्जरीविकारांश्च पाटलेन चंचुपुटेन दत्त्वा दत्त्वा गुरुणापत्यप्रेम्णा तस्मिन्नेव क्रोडान्तर्निहिततनयाः क्षपाः क्षपयन्ति स्म ।

( जन्मकथनं मृगयाकोलाहलवर्णनं च ) .

एकस्मिञ्जीर्णकोटरे जायया सह निवसतः पश्चिमे वयसि वर्तमानस्य कथमपि पितुरहमको विधिवशात्सूनुरभवम् । मम जायमानस्यैव प्रबलया प्रसववेदनया जननी मे परलोकमगमत् । अभिमतजायाविनाशशोकदुःखितोऽपि खलु तातः सुतस्नेहादभ्यन्तरे निरुध्य पटुप्रसरमपि शोकमेकाकी मत्संवर्धनपर एवाभवत् । अतिपरिणतवयाश्च स्फुटिताग्रकोटिना चंचुपुटेन परनीडपतिताभ्यः शालिवल्लरीभ्यस्तण्डुलकणा-

नादायादाय वृक्षमूलनिपतितानि च शुककुलावदलितानि फलशकलानि समाहृत्य परिभ्रमितुमशक्तो मह्यमदात् । प्रतिदिवसं च मदुपभुक्तशेषमकरोदशनम् ।

एकदा शनैः शनैरुदिते भगवति सवितरि प्रयातेष्वभिमतानि दिगन्तराणि शुककुलेषु शुकशावकसनाथेऽपि निःशब्दतया शून्य इव तस्मिन् वनस्पतौ स्वनीडावस्थित एव ताते मयि च शैशवादसंजातपक्षपुटे पितुः समीपवर्तिनि कोटरगते सहसैव तस्मिन् महावने संत्रासितसकलवनचरो मृगयाकोलाहलध्वनिरुदचरत् । आकर्ण्य च तमहमश्रुतपूर्वमुपजातवेपथुरर्भकतया जर्जरितकर्णविवरो भयविह्वलः समीपवर्तिनः पितुः प्रतीकारबुद्ध्या जराशिथिलपक्षपुटान्तरमविशम् । अनन्तरं सरभसमितो गजयूथपतिलुलितकमलिनीपरिमल इतो मृगकदम्बमितो वनगजकुलमितो वराहयूथमितो वनमहिषवृन्दमितः शिखण्डिमण्डलविरुतमितो मृगपतिभिद्यमानकुम्भकुञ्जररासितमिदमार्द्रपंकमलिना वराहपद्धतिरियं हरिणरोमन्थफेनसंहतिरेष करिमौक्तिकदलदन्तुरो मृगपतिमार्ग एषा प्रत्यग्रप्रसूतवनमृगीगर्भरुधिरलोहिनी भूमिस्त्वरिततरमध्यास्यतामियं वनस्थली तरुशिखरमारुह्यतामालोक्यतां दिगियमाकर्ण्यतामयं शब्दो गृह्यतां धनुरवहितैः स्थीयतां विमुच्यन्तां श्वान इत्यन्योन्यमभिवदतो मृगयासक्तस्य महतो जनसमूहस्य तरुगहनान्तरितविग्रहस्य क्षोभितकाननं कोलाहलमशृणवम् ।

( शबरसैन्यदर्शनम् )

अथ नातिचिरान्मृदङ्गध्वानिधीरेण शबरताडितानां केसरिणां निनादेन जलधररसितानुकारिणा गजयूथपतीनां गर्जितेनानुधावत्सारमेयत्रासिनामालोलतरलतारकाणामेणकानां करुणकूजितेन निहतयूथपतीनां प्रत्यग्रपतिविनाशशोकदीर्घेण करिणीनां चीत्कृतेन कतिपयदिवसप्रसूतानां खड्गिधेनुकानां त्रासपरिभ्रष्टपोतकान्वेषिणीना-

-मुन्मुक्तकण्ठमारसन्तीनामाक्रन्दितेन तरुशिखरसमुत्पतितानामाकुलाकुलचारिणां पत्त्ररथानां कोलाहलेन प्रधावितानां मृगयूथानां युगपदतिरभसपादपाताभिहताया भुवः कम्पामिव जनयता चरणशब्देन कर्णान्ताकृष्टज्यानां शरनिकरवर्षिणां धनुषां निनादेन शुनां च वनान्तरव्यापिना ध्वानेन सर्वतः प्रचलितमिव तदरण्यमभवत् । अचिराच्च प्रशान्ते तस्मिन् मृगयाकलकले मथनावसानोपशान्तवारिणि सागर इव स्तिमिततामुपगते कानने मन्दीभूतभयोऽहमुपजातकुतूहलः पितुरुत्सङ्गादीषदिव निष्क्रम्य कोटरस्थ एव शिरोधरां प्रसार्य संत्रासतरलतारकः शैशवात्किमिदमितिसंजातदिदृक्षस्तामेव दिशं चक्षुः प्राहिणवम् । अभिमुखमापतच्चानिलसंचालितमिव तमालकाननमन्तकपरिवारमिव परिभ्रमन्तमशुभकर्मसमूहमिवैकत्र समागतं दण्डकारण्यमुनिजनशापसार्थमिव संचरन्तमवगाहप्रस्थितमिव वनमहिषयूथमखिलरूपविनाशाय धूमकेतुजालमिव समुद्गतमन्धकारितकाननमनेकसहस्रसंख्यमतिभयजनकमुत्पातवेतालव्रातमिव शबरसैन्यमद्राक्षम् ।

( शबरसेनापतिवर्णनम् )

मध्ये च तस्य महतः शबरसैन्यस्य प्रथमे वयसि वर्तमानमायतललाटमतितुङ्गघोरघोणमचिरप्रहतगजकपोलगृहीतेन सुरभिणा मदेन कृताङ्गरागमुपरि तत्परिमलान्धेन परिभ्रमता मधुकरकुलेन तमालपल्लवेनेव निवारितातपमाजानुलम्बेन कुञ्जरकरप्रमाणमिव गृहीत्वा निर्मितेन भुजयुगलेनोपशोभितं विन्ध्याशिलाविशालेन वक्षःस्थलेनोद्भासमानं लाक्षालोहितकौशेयपरिधानं मृगवधूवैधव्यदीक्षादानदक्षैरनेकवर्णैः श्वभिरतिप्रमाणाभिश्च कौलेयककुटुम्बिनीभिरनुगम्यमानं जलधरच्छायामलिनाम्बरैरनेकवृत्तान्तैः शबरवृन्दैः परिवृतमपत्यमिव विन्ध्याचलस्यांशावतारमिव कृतान्तस्य सहोदरमिव पापस्य सारमिव कलिकालस्य भीषणमपि

महासत्त्वतया गम्भीरमिवोपलक्ष्यमाणमनभिभवनीयाकृतिं मातङ्गनामानं शबरसेनापतिमपश्यम् । अभिधानं तु पश्चात्तस्याहमश्रौषम् । आसीच्च मे मनसि--अहो मोहप्रायमेतेषां जीवितं साधुजनगर्हितं च चरितम् । तथा हि । परुषपिशितोपहारे धर्मबुद्धिराहारः साधुजनगर्हितो मधुमांसादिः श्रमो मृगया शास्त्रं शिवारुतं समुपदेष्टारः सदसतां कौशिकाः प्रज्ञा शकुनिज्ञानं परिचिताः श्वानो राज्यं शून्यास्वटवीष्वापानकमुत्सवो मित्राणि धनूंषि सहाया विषदिग्धमुखा भुजङ्गा इव सायका गीतमुत्सादकारि मुग्धमृगाणां कलत्राणि बन्दीगृहीताः परयोषितः क्रूरात्माभिः शार्दूलैः सह संवासः पशुरुधिरेण देवतार्चनं मांसेन बलिकर्म चौर्येण जीवनं भूषणानि भुजङ्गमणयो वनकरिमदैरङ्गरागो यस्मिन्नेव कानने निवसन्ति तदेवोत्खातमूलमशेषतः कुर्वते ।

इति चिन्तयत्येव मयि शबरसेनापतिरटवीभ्रमणसमुद्भवं श्रममपनिनीषुरागत्य तस्यैव शाल्मलीतरोरधश्छायायामवतारितकोदण्डः परिजनोपनीतपल्लवासने समुपाविशत् । अन्यतमस्तु शबरयुवाससंभ्रममवतीर्य तस्मात् सरसोऽरविन्दकोशरजःकषायमम्भः कमलिनीपत्रपुटेन प्रत्यग्रोद्धृताश्च धौतपङ्कनिर्मला मृणालिकाः समुपाहरत् । आपीतसलिलश्च सेनापतिस्ता मृणालिकाः शशिकला इव सैंहिकेयः क्रमेणादशत् । अपगतश्रमश्चोत्थाय परिपीताम्भसा सकलेन तेन शबरसैन्येनानुगम्यमानः शनैःशनैरभिमतदिगन्तरमयासीत् ।

( कस्यचिज्जीर्णशबरस्य हस्तेन शुकपितृनिधनं शुकस्य शाल्मलीवृक्षपतनं च )

एकतमस्तु जरच्छबरस्तस्मात् पुलिन्दवृन्दादनासादितहरिणपिशितः पिशिताशन इव विकृतदर्शनः पिशितार्थी तस्मिन्नेव तरुतले मुहूर्तमिव व्यलम्बत । अन्तरिते च तस्मिन् सेनापतौ स जीर्णशबरः पिबन्निवास्माकमायूंषि रुधिरबिंदुपाटलया कपिलभ्रूलतापरिवेषभीष-

णया दृशा गणयन्निव शुककुलायस्थानानि श्येन इव विहङ्गामिषास्वादलालसः सुचिरमारुरुक्षुस्तं वनस्पतिमामूलादपश्यत् । उत्क्रान्तामिव तस्मिन् क्षणे तदालोकनभीतानां शुककुलानामसुभिः । किमिव हि दुष्करमकरुणानाम् । यतः स तमनेकतालतुङ्गमभ्रंकषशाखाशिखरमपि सोपानैरिवायत्नेनैव पादमपारुह्यताननुपजातोत्पतनशक्तीन् कांश्चिदल्पदिवसजातान् गर्भच्छविपाटलाञ्शाल्मलीकुसुमशङ्कामुपजनयतः कांश्चिदुद्भिद्यमानपक्षतया नलिनसंवर्तिकानुकारिणः कांश्चिदर्कफलसदृशान् फलानीव तस्य वनस्पतेः शाखान्तरेभ्यः शुकशावकानग्रहीदपगतासूंश्च कृत्वा क्षितावपातयत् । तातस्तु महान्तमकाण्ड एव प्राणहरमप्रतीकारमुपनतमुपप्लवमालोक्य द्विगुणतरोपजातवेपथुर्मरणभयादुद्भ्रान्ततरलतारको विषादशून्यामश्रुजलप्लुतां दृशमितस्ततो दिक्षु विक्षिपन् उच्छुष्कतालुरात्मप्रतीकाराक्षमस्त्रासत्रस्तसन्धिशिथिलेन पक्षसंपुटेनाच्छाद्य मां तत्कालोचितं प्रतीकारं मन्यमानः स्नेहपरवशो मद्रक्षाकुलः किंकर्तव्यताविमूढः क्रोडभागेन मामवष्टभ्य तस्थौ । असावपि पापः शाखान्तरैः संचरमाणः कोटरद्वारमागत्य जीर्णासितभुजङ्गमभीषणं प्रसार्य कोदण्डगुणाकर्षणव्रणाङ्कितप्रकोष्ठमन्तकदण्डानुकारिणं वामबाहुमतिनृशंसो मुहुर्मुहुर्दत्तचंचुप्रहारमुत्कूजन्तमाकृष्य तातं गतासुमकरोत् । मां तु स्वल्पत्वाद्भयसंपिंडितांगत्वात् सावशेषत्वाच्चायुषः कथमपि पक्षपुटान्तरगतं नालक्षयत् । उपरतं च तमवनितले शिथिलशिरोधरमधोमुखममुञ्चत् । अहमपि तच्चरणान्तरे विनिवेशितशिरोधरो निभृतमङ्गनिलीनस्तेनैव सहापतम् । अवशिष्टपुण्यतया महतः शुष्कपत्रराशेरुपरि पतितमात्मानमपश्यम् । अङ्गानि येन मे नाशीर्यन्त । यावच्चासौ तस्मात्तरुशिखरान्नावतरति तावदहमवशीर्णपर्णसवर्णत्वादस्फुटोपलक्ष्यमाणमूर्तिः पितरमुपरतमुत्सृज्य नृशंस इव प्राणत्यागयोग्येऽपि काले जन्मसहभुवा भयेनेव केवलमभिभूयमानः किञ्चिदुपजाताभ्यां पक्षाभ्यामीषत्कृतावष्टम्भो

लुठन्नितस्ततः कृतान्तमुखकुहरादिव विनिर्गतमात्मानं मन्यमानो नातिदूरवर्तिनोऽतिमहतस्तमालविटपिनो मूलदेशमविशम् । अवतीर्य च तेन समयेन क्षितितलविप्रकीर्णान् संहृत्य शुकशिशूनेकलतापाशसंयतानाबध्य पर्णपुटेऽतित्वरितगमनः सेनापतिगतेनैव वर्त्मना तामेव दिशमगच्छत् ।

( धरणिधूलिसंसर्पतः शुकस्य बलवाञ्जलाभिलाषः सलिलसमीपाभिसरणोद्यमश्च )

मां तु लब्धजीविताशं प्रत्यग्रपितृमरणशोकशुष्कहृदयमतिदूरपातादायासितशरीरं संत्रासजाता सर्वाङ्गोपतापिनी बलवती पिपासा परवशमकरोत् । अनया च कालकलया सुदूरमतिक्रान्तः स पापकृदिति परिकलय्य किञ्चिदुन्नमितकन्धरो भयचकितया दृशा दिशोऽवलोक्य तृणेऽपि चलति पुनः प्रतिनिवृत्त इति तमेव पदे पदे पापकारिणमुत्प्रेक्षमाणो निष्क्रम्य तस्मात्तरुमूलात्सलिलसमीपं सर्तुं प्रयत्नमकरवम् । अजातपक्षतया नातिस्थिरतरचरणसंचारस्य मुहुर्मुखेन पततो मुहुस्तिर्यङ्-निपतितमात्मानमेकया पक्षपाल्या सन्धारयतः क्षितितलसंसर्पणश्रमातुरस्यानभ्यासवशादेकमपि दत्त्वा पदमनवरतमुन्मुखस्य स्थूलस्थूलं श्वसतो धूलिधूसरस्य संसर्पतो मम समभून्मनसि—अतिकष्टास्ववस्थास्वपि जीवितनिरपेक्षा न भवन्ति खलु जगति प्राणिनां प्रवृत्तयः । नास्ति जीवितादन्यदभिमततरमिह जगति सर्वजन्तूनामेव । उपरतेऽपि सुगृहीतनाम्नि ताते यदहमविकलेन्द्रियः पुनरेव प्राणिमि । धिङ् मामकरुणमतिनिष्ठुरमकृतज्ञम् । मया हि लोकान्तरगतायामम्बायां नियम्य शोकावेगमाप्रसवदिवसात् परिणतवयसापि सता तैस्तैरुपायैः संवर्धनक्लेशमतिमहान्तमपि स्नेहवशादगणयता यत्तातेन परिपालितस्तत्सर्वमेकपदे विस्मृतम् । अतिकृपणाः खल्वमी प्राणाः । यदुपकारिणमपि तातं क्वापि गच्छन्तमद्यापि नानुगच्छन्ति । सर्वथा न कंचिन्न खलीकरोति जीविततृष्णा यदीदृगवस्थमपि मामायासयति जलाभिलाषः । मन्ये

चागणितपितृमरणशोकस्य निर्घृणतैव केवलमियं मम सलिलपानबुद्धिः । अद्यापि दूर एव सरस्तीरम् । दिवसस्येयं कष्टा दशा वर्तते । रविरम्बरतलमध्यवर्ती स्फुरन्तमातपं विकिरति करैः । अधिकामुपजनयति तृषाम् । संततप्तपांसुपटलदुर्गमा भूः । अतिप्रबलपिपासावसन्नानि गन्तुमल्पमपि मे नालमङ्गकानि । अप्रभुरस्म्यात्मनः । सीदति मे हृदयम् । अन्धकारतामुपयाति चक्षुरपि । अपि नाम खलो विधिरनिच्छतोऽपि मे मरणमुपपादयेदिति ।

( हारीतनाम्नो मुनिकुमारस्य तत्रागमनं तेन समुपजातकरुणेन शुकग्रहणं तत्पिपासाशमनं तस्य जाबालिमहर्षेराश्रमं प्रत्यानयनं च )

तस्मात्सरसोऽदूरवर्तिनि तपोवने जाबालिर्नाम महामुनिरवसत् । तत्तनयश्च हारीतनामा मुनिकुमारकः सनत्कुमार इव सर्वविद्यावदातचेताः सवयोभिरपरैस्तपोधनकुमारैरनुगम्यमानस्तेनैव पथा द्वितीय इव भगवान् विभावसुः स्फाटिकेनाक्षवलयेन दक्षिणश्रवणावलम्बिना विराजमानो ललाटपट्टके भस्मत्रिपुण्ड्रकेणालङ्कृतः स्कन्धदेशावलम्बिना कृष्णाजिनेन परीतमूर्तिरभिनवबिससूत्रनिर्मितेनेव वामांसावलम्बिना यज्ञोपवीतेनोद्भासमानो देवतार्चनार्थमागृहीतवनलताकुसुमपरिपूर्णपर्णपुटसनाथशिखरेणाषाढदण्डेन व्यापृतसव्येतरपाणिरुपजातपरिचयेन नीवारमुष्टिसंवर्धितेन तपोवनमृगेणानुयातस्तदेव कमलसरः सिष्णासुरुपागमत् ।

प्रायेणाकारणमित्राण्यतिकरुणार्द्राणि सदा खलु भवन्ति सतां चेतांसि । यतः स मां तदवस्थमवलोक्य समुपजातकरुणः समीपवर्तिनमृषिकुमारमन्यतममब्रवीत्—अयं कथमपि शुकशिशुरसंजातपक्षपुट एव तरुशिखरादस्मात् परिच्युतः । श्येनमुखपरिभ्रष्टेन वानेन भवितव्यम् । तथाहि । अतिदवीयस्तया प्रपातस्याल्पशेषजीवितोऽयमामीलितलोचनो मुहुर्मुहुर्मुखेन पतति मुहुर्मुहुरत्युल्बणं श्वसिति मुहुर्मुहुश्चंचुपुटं

विवृणोति न शक्नोति शिरोधरां धारयितुम् । तदेहि यावदेवायमसुभिर्न विमुच्यते तावदेव गृहाणेममवतारय सलिलसमीपमित्यभिधाय तेन मां सरस्तीरमानाययत् । उपसृत्य च जलसमीपमेकदेशनिहित-दण्डकमण्डलुरादाय स्वयं मां मुक्तप्रयत्नमुत्तानितमुखमङ्गुल्या कतिचित् सलिलबिन्दूनपाययत् । अम्भःक्षोदकृतसेकं चोपजातनवीनप्राणमुपतटप्ररूढस्य नवनलिनीदलस्य जलशिशिरायां छायायां निधाय स्वोचितमकरोत् स्नानविधिम् । अभिषेकावसाने चानेकप्राणायामपूतो जपन् पवित्राण्यघमर्षणानि प्रत्यग्रभग्नैरुन्मुखो रक्तारविन्दैर्नलिनीपत्रपुटेन भगवते सवित्रे दत्त्वार्घमुदतिष्ठत् । आगृहीतधौतधवलवल्कलश्च कमल-किञ्जल्कसुरभिणा सरोवारिणा प्रत्यग्रस्नानार्द्रजटेन सकलेन तेन मुनि-कुमारकदम्बकेनानुगम्यमानो मां गृहीत्वा तपोवनाभिमुखं शनैरगच्छत् ।

( जाबालिदर्शनं तदुपजनितशुकमनःसङ्कल्पाश्च )

अनतिदूरमिव गत्वाऽतिरमणीयमपरमिव ब्रह्मलोकमाश्रममपश्यम् । तत्र च रक्ताशोकतरोरधश्छायायामुपविष्टं समन्तान्महर्षिभिः परिवृतं, आयामिनीभिः पलितपाण्डुराभिर्जटाभिरुपशोभितमुपरचितभस्मत्रिपुण्ड्रकेण ललाटफलकेनोपेतमधोमुखचन्द्रकलाकाराभ्यां भ्रूलताभ्यामवष्टभ्यमानदृष्टिमनवरतमन्त्राक्षराभ्यासविवृताधरपुटतया निष्पतद्भिरतिशुचिभिः सत्यप्ररोहैरिव दशनमयूखैर्धवलितपुरोभागमानाभिलम्बकूर्चकलापमाननमादधानं समुन्नतविरलास्थिपञ्जरमंसावलम्बितयज्ञोपवीतमासन्नवर्तिना मन्दाकिनीसलिलपूर्णेन त्रिदण्डोपविष्टेन स्फाटिककमण्डलुना विकचपुण्डरीकराशिमिव राजहंसेनोपशोभमानं भस्मपाण्डुरोमाश्लिष्टशरीरं भगवन्तं जाबालिं महर्षिमपश्यम् ।

महर्षिमवलोक्य चाहमचिन्तयम्—अहो प्रभावस्तपसाम् । इयमस्य शान्तापि मूर्तिरुत्तप्तकनकावदाता परिस्फुरन्ती सौदामनीव चक्षुषः प्रतिहन्ति तेजांसि । सततमुदासीनापि महाप्रभावतया भयमिवो-

पजनयति प्रथमोपगतस्य । नित्यमसहिष्णु तपस्विनां तनुतपसामपि तेजः प्रकृत्या भवति । किमुत सकलभुवनतलवन्दितचरणानामनवरत-तपःक्षपितमलानां करतलामलकवदखिलं जगदालोकयतां दिव्येन चक्षुषा भगवतामेवंविधानामघक्षयकारिणाम् । पुण्यानि हि नामग्रहणानि महा-मुनीनाम् । किं पुनर्दर्शनानि । धन्यमिदमाश्रमपदमयमधिपतिर्यत्र । अथवा भुवनतलमेव धन्यमखिलमनेनाधिष्ठितमवनितलकमलयोनिना । पुण्यभाजः खल्वमी मुनयो यदहर्निशमेनमपरमिव नलिनासनमपगता-न्यव्यापारा मुखावलोकननिश्चलदृष्टयः पुण्याः कथाः शृण्वंतः समुपा-सते । सरस्वत्यपि धन्या यास्य सततमतिप्रसन्ने करुणाजलनिस्यन्दि-न्यगाधगाम्भीर्ये रुचिरद्विजपरिवारा मुखकमलसंपर्कमनुभवन्ती निवसति हंसीव मानसे । चतुर्मुखकमलवासिभिश्चतुर्वेदैः सुचिरादिदमपरमुचि-तमासादितं स्थानम् । एनमासाद्य शरत्कालमिव जलदसमयकलुषिताः प्रसादमुपगताः पुनरपि जगति सरित इव सर्वविद्याः । नियतमिह सर्वात्मना कृतावस्थितिना भगवता परिभूतकलिकालविलसितेन धर्मेण न स्मर्यते कृतयुगस्य । धरणितलमनेनाधिष्ठितमालोक्य न वहति नूनमिदानीं सप्तर्षिमण्डलनिवासाभिमानमम्बरतलम् । अहो महासत्त्वेयं जरा यास्य प्रलयरविरश्मिनिकराक्रिरणपाण्डुशिरोरुहे जटाभारे फेन-पुञ्जधवला गङ्गेव पशुपतेः क्षीराहुतिरिव शिखाकलापे विभावसोर्नि-पतन्ती न भीता । बहलाज्यधूमपटलमलिनीकृताश्रमस्य भगवतः प्रभा-वाद्भीतमिव रविकिरणजालमपि दूरतः परिहरति तपोवनम् । एते च पवनलोलपुञ्जीकृतशिखाकलापा रचिताञ्जलय इवात्र मन्त्रपूतानि हवींषि गृह्णन्त्येतत्प्रीत्याशुशुक्षणयः । तरलितदुकूलवल्कलोऽयं चाश्र-मलताकुसुमसुरभिपरिमलो मन्दमन्दचारी सशङ्क इवास्य समीपमुपसर्पति गन्धवाहः । प्रायो महाभूतानामपि दुरभिभवानि भवन्ति तेजांसि । सर्वतेजस्विनामयं चाग्रणीः । द्विसूर्यमिवाभाति जगदनेनाधिष्ठितं महा-त्मना । निष्कम्पेव क्षितिरेतदवष्टम्भात् । एष प्रवाहः करुणरसस्य ।

सन्तरणसेतुः संसारसिंधोः । परशुस्तृष्णालतागहनस्य । सागरः सन्तोषामृतरसस्य । मूलमुपशमतरोः । तीर्थं सर्वविद्यावतागणाम् । वडवानलो लोभार्णवस्य । निकषोपलः शास्त्ररत्नानाम् । दिवसकरो मोहान्धकारस्य । आयतनं मङ्गलानाम् । दर्शकः सत्पथानाम् । उत्पत्तिः साधुतायाः । आश्रयः सत्त्वस्य । कोशस्तपसः । सखा सत्यस्य । क्षेत्रमार्जवस्य । प्रसवः पुण्यसंचयस्य । अदत्तावकाशो मत्सरस्य । अरातिर्विपत्तेः ।

कादम्बरी.

---

## ४०. शकुन्तलाभर्तृगृहप्रस्थानं काश्यपसंदेशश्च.

( सर्वे परिक्रामन्ति )

**काश्यपः**—भो भोः संनिहितास्तपोवनतरवः ।

पातुं न प्रथमं व्यवस्यति जलं युष्मास्वपीतेषु या
नादत्ते प्रियमंडनापि भवतां स्नेहेन या पल्लवम् ॥
आद्ये वः कुसुमप्रसूतिसमये यस्या भवत्युत्सवः ।
सेयं याति शकुंतला पतिगृहं सर्वैरनुज्ञायताम् ॥ १ ॥

( कोकिलरवं सूचयित्वा )

अनुमतगमना शकुन्तला, तरुभिरियं वनवासबन्धुभिः ।
परभृताविरुतं कलं यथा, प्रतिवचनीकृतमेभिरीदृशम् ॥ २ ॥

( आकाशे )

रम्यान्तरः कमलिनीहरितैः सरोभिश्छायाद्रुमैर्नियमितार्कमयूखतापः ।
भूयात्कुशेशयरजोमृदुरेणुरस्याः, शान्तानुकूलपवनश्चशिवश्च पन्थाः ॥ ३ ॥

( सर्वे सविस्मयमाकर्णयन्ति )

**गौतमी**—जाते ज्ञातिजनस्निग्धाभिरनुज्ञातगमनाऽसि तपोवनदेवताभिः । प्रणम भगवतीः ।

**शकुन्तला**—( सप्रणामं परिक्रम्य । जनान्तिकम् ) हला प्रियंवदे, आर्यपुत्रदर्शनोत्सुकाया अप्याश्रमपदं परित्यजन्त्या दुःखेन मे चरणौ पुरतः प्रवर्तेते ।

**प्रियंवदा**—न केवलं तपोवनविरहकातरा सख्येव । त्वयोपास्थितवियोगस्य तपोवनस्यापि तावत्समवस्था दृश्यते ।

उद्गलितदर्भकवला मृग्यः परित्यक्तनर्तना मयूराः ।
अपसृतपाण्डुपत्रा मुञ्चन्त्यश्रूणीव लताः ॥ ४ ॥

**शकुन्तला**—( स्मृत्वा ) लताभगिनीं वनज्योत्स्नां तावदामन्त्रयिष्ये ।

**काश्यपः**—अवैमि ते तस्यां सोदर्यस्नेहम् । इयं तावद्दक्षिणेन ।

**शकुन्तला**—वनज्योत्स्ने चूतसंगतापि मां प्रत्यालिङ्गेतोगताभिः शाखाबाहुभिः । अद्यप्रभृति दूरपरिवर्तिनी ते खलु भविष्यामि ।

**काश्यपः**—

संकल्पितं प्रथममेव मया तवार्थे, भर्तारमात्मसदृशं सुकृतैर्गता त्वम् ।
चूतेन संश्रितवती नवमालिकेयमस्यामहं त्वयि च संप्रति वीतचिन्तः॥५॥

इतः पन्थानं प्रतिपद्यस्व ।

**शकुन्तला**—( सख्यौ प्रति ) हला एषा द्वयोर्युवयोर्हस्ते निक्षेपः ।

**सख्यौ**—अयं जनः कस्य हस्ते समर्पितः ( इति बाष्पं विसृजतः )

**काश्यपः**—अनसूये, अलं रुदित्वा । ननु भवतीभ्यामेव स्थिरीकर्तव्या शकुन्तला ।

( सर्वे परिक्रामन्ति )

**शकुन्तला**—तात, एषोटजपर्यन्तचारिणी गर्भमन्थरा मृगवधूर्यदानघप्रसवा भवति तदा मह्यं कमपि प्रियनिवेदयितृकं विसर्जयिष्यथ।

**काश्यपः**—नेदं विस्मरिष्यामः ।

**शकुन्तला**—( गतिभङ्गं रूपयित्वा) को नु खल्वेष निवसने मे सज्जति ? ( इति परावर्तते )

**काश्यपः**—वत्से,

यस्य त्वया व्रणविरोपणमिङ्गुदीनां, तैलं न्यषिच्यत मुखे कुशसूचिविद्धे ।
श्यामाकमुष्टिपरिवर्धितको जहाति,सोऽयं न पुत्रकृतकः पदवीं मृगस्ते ॥६॥

**शकुन्तला**—वत्स किं सहवासपरित्यागिनीं मामनुसरसि। अचिरप्रसूतया जनन्या विना वर्धित एव । इदानीमपि मया विरहितं त्वां तातश्चिन्तयिष्यति । निवर्तस्व तावत् । ( इति रुदती प्रस्थिता)

**काश्यपः**—

उत्पक्ष्मणोर्नयनयोरुपरुद्धवृत्तिं, बाष्पं कुरु स्थिरतया विहतानुबन्धम् ।
अस्मिन्नलक्षितनतोन्नतभूमिभागे मार्गे पदानि खलु ते विषमीभवन्ति ॥७

**शाङ्गरवः**—भगवन् ,ओदकान्तं स्निग्धो जनोऽनुगन्तव्य इति श्रूयते। तदिदं सरस्तीरम् । अत्र संदिश्य प्रतिगन्तुमर्हसि ।

**काश्यपः**—तेन हीमां क्षीरवृक्षच्छायामाश्रयामः ।

( सर्वे परिक्रम्य स्थिताः )

**काश्यपः**—(आत्मगतम्) किं नु खलु तत्रभवतो दुष्यन्तस्य युक्तरूपमस्माभिः संदेष्टव्यम् । (इति चिन्तयति)

**शकुन्तला**—( जनान्तिकम् ) हला पश्य नलिनीपत्रान्तरितमपि सहचरमपश्यन्त्यातुरा चक्रवाक्यारटति दुष्करमहं करोमीति ।

**अनसूया**—सखि मैवं मन्त्रयस्व ।

एषापि प्रियेण विना गमयति रजनीं विषाददीर्घतराम्।
गुर्वपि विरहदुःखमाशाबन्धः साहयति ॥ ८

**काश्यपः**—शार्ङ्गरव, एवं त्वया मद्वचनात्स राजा शकुन्तलां पुरस्कृत्य वक्तव्यः ।

अस्मान्साधु विचिन्त्य संयमधनानुच्चैःकुलं चात्मन-
स्त्वय्यस्याः कथमप्यबान्धवकृतां स्नेहप्रवृत्तिं च ताम् ।
सामान्यप्रतिपत्तिपूर्वकमियं दारेषु दृश्या त्वया
भाग्यायत्तमतःपरं न खलु तद्वाच्यं वधूबन्धुभिः ॥ ९

**शाङ्गरवः**—गृहीतः संदेशः ।

**काश्यपः**—वत्से त्वमिदानीमनुशासनीयासि । वनौकसोऽपि सन्तो लौकिकज्ञा वयम् ।

**शाङ्गरवः**—न खलु धीमतां कश्चिदविषयो नाम ।

**काश्यपः**—सा त्वमितः पतिकुलं प्राप्य

शुश्रूषस्व गुरून्कुरु प्रियसखीवृत्तिं सपत्नीजने
भर्तुर्विप्रकृतापि रोषणतया मा स्म प्रतीपं गमः ।
भूयिष्ठं भव दक्षिणा परिजने भाग्येष्वनुत्सेकिनी
यान्त्येवं गृहिणीपदं युवतयो वामाः कुलस्याधयः॥ १०

कथं वा गौतमी मन्यते

**गौतमी**—एतावान्वधूजनस्योपदेशः । जाते, एतत्खलु सर्वमवधारय ।

**काश्यपः**—वत्से परिष्वजस्व मां सखीजनं च ।

**शकुन्तला**—तात, इत एव किं प्रियंवदामिश्राः सख्यो निवर्तिष्यन्ते ।

**काश्यपः**—वत्से, इमे अपि प्रदेये । न युक्तमनयोस्तत्र गन्तुम् । त्वया सह गौतमी यास्यति ।

**शकुन्तला**—( पितरमाश्लिष्य ) कथमिदानीं तातस्याङ्कात्परिभ्रष्टा मलयतटोन्मूलिता चन्दनलतेव देशांतरे जीवितं धारयिष्ये ।

**काश्यपः**—वत्से किमेवं कातराऽसि ।

अभिजनवतो भर्तुः श्लाघ्ये स्थिता गृहिणीपदे
विभवगुरुभिः कृत्यैस्तस्य प्रतिक्षणमाकुला ।
तनयमचिरात्प्राचीवार्कं प्रसूय च पावनं
मम विरहजां न त्वं वत्से शुचं गणयिष्यसि ॥ ११

( शकुन्तला पितुः पादयोः पतति )

**काश्यपः**—यदिच्छामि ते तदस्तु ।

शाकुन्तलम् ।

---

## ४१. अजविलापः ।

विललाप स बाष्पगद्गदं, सहजामप्यपहाय धीरताम् ।
अभितप्तमयोऽपि मार्दवं, भजते कैव कथा शरीरिषु ॥ १
कुसुमान्यपि गात्रसङ्गमात्, प्रभवन्त्यायुरपोहितुं यदि ।
न भविष्यति हन्त साधनं, किमिवान्यत् प्रहरिष्यतो विधेः ॥२
अथवा मृदु वस्तु हिंसितुं, मृदुनैवारभते प्रजांतकः ।
हिमसेकविपत्तिरत्र मे, नलिनी पूर्वनिदर्शनं मता ॥ ३
स्रगियं यदि जीवितापहा, हृदये किं निहिता न हन्ति माम् ।
विषमप्यमृतं क्वचिद्भवेदमृतं वा विषमीश्वरेच्छया ॥ ४
अथवा मम भाग्यविप्लवादशनिः कल्पित एष वेधसा ।
यदनेन तरुर्न पातितः, क्षपिता तद्विटपाश्रिता लता ॥ ५
कृतवत्यसि नावधीरणामपराद्धेऽपि यदा चिरं मयि ।
कथमेकपदे निरागसं जनमाभाष्यमिमं न मन्यसे ॥ ६
ध्रुवमस्मि शठः शुचिस्मिते, विदितः कैतववत्सलस्तव ।
परलोकमसंनिवृत्तये यदनापृच्छ्य गतासि मामितः ॥ ७

कुसुमोत्खचितान् वलीभृतश्चलयन् भृङ्गरुचस्तवालकान् ।
करभोरु करोति मारुतस्त्वदुपावर्तनशाङ्कि मे मनः ॥ ८
तदपोहितुमर्हसि प्रिये, प्रतिबोधेन विषादमाशु मे ।
ज्वलितेन गुहागतं तमस्तुहिनाद्रेरिव नक्तमोषधिः ॥ ९
इदमुच्छ्वसितालकं मुखं, तव विश्रान्तकथं दुनोति माम् ।
निशि सुप्तमिवैकपङ्कजं, विरताभ्यन्तरषट्पदस्वनम् ॥ १०
शशिनं पुनरेति शर्वरी, दयिता द्वन्द्वचरं पतत्रिणम् ।
इति तौ विरहान्तरक्षमौ, कथमत्यन्तगता न मां दहेः ॥ ११
नवपल्लवसंस्तरेऽपि ते, मृदु दूयेत यदङ्गमर्पितम् ।
तदिदं विषहिष्यते कथं, वद वामोरु चिताधिरोहणम् ॥ १२
इयमप्रतिबोधशायिनी, रशना त्वां प्रथमा रहःसखी ।
गतिविभ्रमसादनीरवा, न शुचा नानुमृतेव लक्ष्यते ॥ १३
मिथुनं परिकल्पितं त्वया, सहकारः फलिनी च नन्विमौ ।
अविधाय विवाहसत्क्रियामनयोर्गम्यत इत्यसांप्रतम् ॥ १४
कुसुमं कृतदोहदस्त्वया, यदशोकोऽयमुदीरयिष्यति ।
अलकाभरणं कथं नु तत्तव नेष्यामि निवापमाल्यताम् ॥ १५
स्मरतेव सशब्दनूपुरं, चरणानुग्रहमन्यदुर्लभम् ।
अमुना कुसुमाश्रुवर्षिणा, त्वमशोकेन सुगात्रि शोच्यसे ॥ १६
तव निःश्वसितानुकारिभिर्बकुलैरर्धचितां समं त्वया ।
असमाप्य विलासमेखलां, किमिदं किन्नरकण्ठि सुप्यते ॥ १७
समदुःखसुखः सखीजनः, प्रतिपच्चन्द्रनिभोऽयमात्मजः ।
अहमेकरसस्तथापि ते, व्यवसायः प्रतिपत्तिनिष्ठुरः ॥ १८
धृतिरस्तमिता रतिश्च्युता, विरतं गेयमृतुर्निरुत्सवः ।
गतमाभरणप्रयोजनं, परिशून्यं शयनीयमद्य मे ॥ १९

गृहिणी सचिवः सखी मिथः, प्रियशिष्या ललिते कलाविधौ ।
करुणाविमुखेन मृत्युना, हरता त्वां वद किं न मे हृतम् ॥ २०

रघुवंशम् ।

---

## ४२. अमात्यो राक्षस आत्मनः परं मित्रं चन्दनदासं महाव्यसनान्मोचयति ।

( ततः प्रविशति चाण्डालः )

**चाण्डालः**---अपसरत । अपसरत । अपेत । अपेत । यदि प्राणान् विभवं कुलं कलत्रं च रक्षितव्यं तद्विषमं राजापथ्यं सुदूरेण परिहरत । अपि च । अपथ्ये सेविते व्याधिर्मरणं वा पुरुषस्य भवति । राजापथ्ये पुनः सेविते सकलमपि कुलं म्रियते । तद्यदि न प्रतीथ तदत्र प्रेक्षध्वमेनं राजापथ्यकारिणं श्रेष्ठिचन्दनदासं सपुत्रकलत्रं वधस्थानं नीयमानम् । ( आकाशे श्रुत्वा ) आर्याः किं भणथ । अस्त्यस्य कोऽपि मोक्षोपाय इति । आर्याः अस्त्यमात्यराक्षसस्य गृहजनं यदि समर्पयति । ( पुनराकाशे ) किं भणथ । एष शरणागतवत्सल आत्मनो जीवितमात्रस्य कारण ईदृशमकार्यं न करिष्यतीति । आर्याः । तेन हि अवधारयतास्य सुखां गतिम् । किमिदानीं युष्माकमत्र प्रतीकारविचारेण । ( ततः प्रविशति द्वितीयचाण्डालानुगतो वध्यवेषधारी शूलं स्कन्धेनादाय कुटुम्बिन्या पुत्रेण चानुगम्यमानश्चन्दनदासः । )

**चन्दनदासः**---( बाष्पम् मुञ्चन् ) हा धिक् । हा धिक् । अस्मादृशानामपि नित्यं चारित्र्यभङ्गभीरूणां चोरजनोचितं मरणं भवतीति नमः कृतान्ताय । अथवा न नृशंसानामुदासीनेष्वितरेषु वा विशेषोऽस्ति । ( समन्तादवलोक्य ) भोः प्रियवयस्य विष्णुदास कथं प्रतिवचनमपि न मे प्रतिपद्यसे । अथवा दुर्लभास्ते खलु मानुषा य एतस्मिन् काले

दृष्टिपथेऽपि तिष्ठन्ति । एतेऽस्मत्प्रियवयस्या अश्रुपातमात्रेण कृतनिवापसलिला इव कथमपि प्रतिनिवर्तमानाः शोकदीनवदना बाष्पगुर्व्या दृष्ट्या मामनुगच्छन्ति ।

**चाण्डालः**—आर्य चन्दनदास । आगतोऽसि वध्यस्थानं तद्विसर्जय परिजनम् ।

**चन्दनदासः**—कुटुम्बिनि निवर्तस्व साम्प्रतम् सपुत्रा । न युक्तं खल्वतः परमनुगन्तुम् ।

**कुटुंबिनी**—( सबाष्पम् ) परलोकं प्रस्थित आर्यो न देशान्तरम् ।

**चन्दनदासः**—आर्ये । अयं मित्रकार्येण मे विनाशो न पुनः पुरुषदोषेण । तदलं विषादेन ।

**कुटुंबिनी**—आर्य यद्येवं तदिदानीमकालः कुलजनस्य निवर्तितुम् ।

**चन्दनदासः**—अथ किं व्यवसितं कुटुंबिन्या ।

**कुटुंबिनी**—भर्तुश्चरणाननुगच्छन्त्या आत्मानुग्रहो भवतीति ।

**चन्दनदासः**—दुर्व्यवसितमिदं त्वया । अयं पुत्रकोऽश्रुतलोकसंव्यवहारो बालोऽनुग्रहीतव्यः ।

**कुटुंबिनी**—अनुगृह्णन्त्वेनं प्रसन्ना देवताः । जात पुत्रक पत पश्चिमयोः पितुः पादयोः ।

**पुत्रः**—( पादयोर्निपत्य ) किमिदानीं मया तातविरहितेनानुष्ठातव्यम् ।

**चन्दनदासः**—पुत्र चाणक्यविरहिते देशे वस्तव्यम् ।

**चाण्डालः**—आर्य, चन्दनदास निखातः शूलस्तत्सज्जो भव ।

**कुटुंबिनी**—आर्याः परित्रायध्वं परित्रायध्वम् ।

**चन्दनदासः**—आर्ये अथ किमत्राक्रन्दसि स्वर्गं गतानां तावद्देवा दुःखितं परिजनमनकम्पते । अन्यच्च मित्रकार्येण मे विनाशो नायुक्तकार्येण । तत् किं हर्षस्थानेऽपि रुद्यते ।

**प्र० चं०**–अरे बिल्वपत्र गृहाण चन्दनदासम्। स्वयमेव परिजनो गमिष्यति।

**द्वि० चं०**—अरे वज्रलोमन्, एष गृह्णामि।

**चन्दनदासः**–मुहूर्तं तिष्ठ यावत्पुत्रकं सान्त्वयामि। ( पुत्रं मूर्ध्नि समाघ्राय ) जात, अवश्यंभवितव्ये विनाशे मित्रकार्यं समुद्वहमानो विनाशमनुभवामि।

**पुत्रः**–तात किमिदमपि भणितव्यम्। कुलधर्मः खल्वेषोऽस्माकम्। ( इति पादयोः पतति )

**चाण्डालः**—अरे गृहाणैनम्।

**कुटुंबिनी**—( सोरस्ताडम् ) आर्य परित्रायस्व।

( प्रविश्य पटाक्षेपेण )

**राक्षसः**–भवति न भेतव्यम्। भो भोः शूलायतना न खलु व्यापादयितव्यश्चन्दनदासः।

येन स्वामिकुलं रिपोरिव कुलं दृष्टं विनश्यत् पुरा
मित्राणां व्यसने महोत्सव इव स्वस्थेन येन स्थितम्।
आत्मा यस्य वधाय वः परिभवक्षेत्रीकृतोऽपि प्रिय-
स्तस्येयं मम मृत्युलोकपदवी वध्यस्रगाबध्यताम्॥ १

**चन्दनदासः**–( सबाष्पं विलोक्य ) अमात्य किमिदम्।

**राक्षसः**–त्वदीयसुचरितैकदेशस्यानुकरणं किलैतत्।

**चन्दनदासः**–अमात्य सर्वमपीमं प्रयासं निष्फलं कुर्वता त्वया किमनुष्ठितम्।

**राक्षसः**–सखे स्वार्थ एवानुष्ठितः। कृतमुपालम्भेन। भद्रमुख निवेद्यतां दुरात्मने चाणक्याय।

**वज्रलोमा**–किमिति ?

**राक्षसः**—

दुष्कालेऽपि कलावसज्जनरुचौ प्राणैः परं रक्षता
नीतं येन यशस्विनातिलघुतामौशीनरीयं यशः ।
बुद्धानामपि चेष्टितं सुचरितैः क्लिष्टं विशुद्धात्मना
पूजार्होऽपि स यत्कृते तव गतः शत्रुत्वमेषोऽस्मि सः ॥

**प्रथमः**—अरे बिल्वपत्रक त्वं तावच्चन्दनदासं गृहीत्वेहैतस्य श्मशानपादपस्य च्छायायां मुहूर्तं तिष्ठ यावदहमाचार्यचाणक्यस्य निवेदयामि गृहीतोऽमात्यराक्षस इति ।

**द्वितीयः**—अरे वज्रलोमन् गच्छ ।

( इति सपुत्रदारेण चन्दनदासेन सह निष्क्रान्तः )

**प्रथमः**—एत्वमात्यः । अस्त्यत्र कोऽपि । निवेदयत तावन्नन्दकुलनगकुलिशस्य मौर्यकुलप्रतिष्ठापकस्यार्यचाणक्यस्य ।

**राक्षसः**—( स्वगतम् ) एतदपि नाम श्रोतव्यम् ।

**चाण्डालः**—एष आर्यनीतिसंयमितबुद्धिपरिसरो गृहीतोऽमात्यराक्षसः ।

मुद्राराक्षसम् ।

---

## ४३. श्रीरामाय लक्ष्मणमुखेन सीतासन्देशः ।

वाच्यस्त्वया मद्वचनात्स राजा, वह्नौ विशुद्धामपि यत्समक्षम् ।
मां लोकवादश्रवणादहासीः, श्रुतस्य किं तत् सदृशं कुलस्य ॥ १
कल्याणबुद्धेरथवा तवायं, न कामचारो मयि शङ्कनीयः ।
ममैव जन्मान्तरपातकानां, विपाकविस्फूर्जथुरप्रसह्यः ॥ २
उपस्थितां पूर्वमपास्य लक्ष्मीं, वनं मया सार्धमसि प्रपन्नः ।
तदास्पदं प्राप्य तयातिरोषात्, सोढास्मि न त्वद्भवने वसन्ती ॥ ३

निशाचरोपप्लुतभर्तृकाणां, तपस्विनीनां भवतः प्रसादात् ।
भूत्वा शरण्या शरणार्थमन्यं, कथं प्रपत्स्ये त्वयि दीप्यमाने ॥ ४
किंवा तवात्यन्तवियोगमोघे, कुर्यामुपेक्षां हतजीवितेऽस्मिन् ।
स्याद्रक्षणीयं यदि मे न तेजस्त्वदीयमन्तर्गतमन्तरायः ॥ ५
साहं तपः सूर्यनिविष्टदृष्टिरूर्ध्वं प्रसूतेश्चरितुं यतिष्ये ।
भूयो यथा मे जननान्तरेऽपि, त्वमेव भर्ता न च विप्रयोगः ॥ ६
नृपस्य वर्णाश्रमपालनं यत्, स एव धर्मो मनुना प्रणीतः ।
निर्वासिताप्येवमतस्त्वयाहं, तपस्विसामान्यमवेक्षणीया ॥ ७

रघुवंशम् ।

---

## ४४. संजातकुतूहलो राजपुत्रो महाश्वेतावृत्तान्तं शुश्रूषते ।

इति परिसमापिताहारां निर्वर्तितसन्ध्योचिताचारां शिलातले विश्रब्धमुपाविष्टां निभृतमुपसृत्य नातिदूरे समुपविश्य मुहूर्तमिव स्थित्वा चन्द्रापीडः सविनयमब्रवीत्—भगवति त्वत्प्रसादप्राप्तिप्रोत्साहितेन कुतूहलेनाकुलीक्रियमाणो मानुषतासुलभो लघिमा बलादनिच्छन्तमपि मां प्रश्नकर्मणि नियोजयति । उपजनयति हि प्रभुप्रसादलवोऽपि प्रागल्भ्यमधीरप्रकृतेः । स्वल्पाप्येकावस्थाने कालकला परिचयमुत्पादयति । अणुरप्युपचारपरिग्रहः प्रणयमारोपयति । तद्यदि नातिखेदकरमिव ततः कथनेनात्मानमनुग्राह्यमिच्छामि । अतिमहत् खलु भवद्दर्शनात्प्रभृति मे कौतुकमस्मिन् विषये । कतरन्मरुतामृषीणां गन्धर्वाणां गुह्यकानामप्सरसां वा कुलमनुगृहीतं भगवत्या जन्मना । किमर्थं वास्मिन् कुसुमसुकुमारे नवे वयसि व्रतग्रहणम् । क्वेदं वयः । क्वेयमाकृतिः । क्व चायं लावण्यातिशयः । क्वेयमिन्द्रियाणामुपशान्तिः । तदद्भुतमिव मे

प्रतिभाति । किं वानेकासिद्धसाध्यसम्बाधानि सुरलोकसुलभान्यपहाय दिव्याश्रमपदान्येकाकिनी वनमिदममानुषमधिवससि । कश्चायं प्रकारो यत्तैरेव पञ्चभिर्महाभूतैरारब्धमीदृशं धवलतां धत्ते शरीरम् । नेदमस्माभिरन्यत्र दृष्टश्रुतपूर्वं वा । अपनयतु नः कौतुकम् । आवेदयतु भवती सर्वमिदमिति ।

कादम्बरी ।

---

## ४५. जाबालिमहर्षेराश्रमपरित्यागारम्भं शूद्रकराजदर्शनान्तं वृत्तान्तमात्मनो वैशम्पायनः शुकः कथयति ।

( प्रथमः परिच्छेदः )

एवमवहितचेतसा हारीतेन संवर्ध्यमानः कतिपयैरेव दिवसैः संजातपक्षोऽभवम् । उत्पन्नोत्पतनसामर्थ्यश्च चेतस्यकरवम् । गमनक्षमस्तु संवृत्तोऽस्मि । तत्र नाम चन्द्रापीडोत्पत्तिपरिज्ञानम् । महाश्वेतापुनः सैवास्ते । तत्किमुत्पन्नज्ञानोऽपि तद्दर्शनेन विनाऽऽत्मानं निमेषमपि दुःखे स्थापयामि । भवतु । तत्रैव गत्वा तिष्ठामि । इति निश्चित्यैकदा प्रातर्विहारानिर्गत एवोत्तरां ककुभं गृहीत्वावहम् । अबद्धदिवसाभ्यस्तगमनतया स्तोकमेव गत्वावाशीर्यन्तेव ममाङ्गानि श्रमेण । अशुष्यच्चञ्चुपुटं पिपासया । नाडिन्धमेनाकम्पितः कण्ठः श्वासेन । तदवस्थश्च शिथिलायमानपक्षतिरत्र पताम्यत्र पतामीति परवानेवान्यतमस्य तमस्विनीतिमिरसंघातस्येव घनहरितपल्लवभरावनम्रस्यासन्नतरस्य सरस्तीरतरुनिकुञ्जस्योपर्यात्मानममुञ्चम् । चिरादेवोन्मुक्ताध्वश्रमक्लमोऽवतीर्य शीतलतरुच्छायास्थितोऽतिशिशिरमरविन्दकिंजल्करजोवाससुरभि पय

आतृप्तेर्निपीय यथाप्राप्तैरकठोरकमलबीजैस्तरुपर्णाङ्कुरफलैश्च कृत्वा क्षुधः प्रतीकारमपराह्णसमये पुनः कियन्तमप्यध्वानं यास्यामीति मनसि कृत्वाध्वश्रमनिःसहान्यङ्गानि विश्रमयितुमन्यतमामाविच्छिन्नच्छायां शाखामारुह्य तरोर्मूलभाग एवातिष्ठम् । तथा स्थितश्चाध्वश्रमसुलभां निद्रामगच्छम् । चिरादिव च लब्धप्रबोधो बद्धमात्मानमनुन्मोचनीयैस्तन्तुपाशैरपश्यम् । अग्रतश्च पाशविरहितमिव कालपुरुषमतिकठिनतया कालिम्ना च वपुषः कालायसपरमाणुभिरिव केवलैर्निर्मितं प्रेतपतिमिवापरं वर्णे चरिते च कृष्णं निवसने कर्मणि च मलिनं वचसि वपुषि च परुषमाकारप्रत्ययादेवानुमीयमानक्रौर्यदोषं पुरुषमद्राक्षम् । आलोक्य च तं तादृशमात्मन उपरि निष्प्रत्याश एवापृच्छम्, भद्र कस्त्वं किमर्थं वा त्वया बद्धोऽस्मि । यद्यामिषतृष्णया तत्किमिति सुप्त एव न व्यापादितोऽस्मि । किं मया निरागसा बन्धदुःखमनुभावितेन । अथ केवलमेव कौतुकात् ततः कृतं कौतुकम् । मुञ्च मामिदानीम् । मया खलु वल्लभजनोत्कण्ठितेन दूरं गंतव्यम् । अकालक्षेपक्षमं वर्तते मे हृदयम् । भवानपि प्राणिधर्मे वर्तते । एवमुक्तः स मामुक्तवान्—महात्मन्, अहं खलु क्रूरकर्मा जात्या चाण्डालः । न च मया त्वमामिषलुब्धेन कुतूहलेन वा बद्धः । मम खलु स्वामी पक्कणाधिपतिरितो नातिदूरे मातङ्गकप्रतिबद्धायां भूमौ कृतावस्थानः । तस्य दुहिता कौतुकमये प्रथमे वयसि वर्तते । तस्यास्त्वं केनापि दुरात्मना कथितो, यथा जाबालेराश्रम एवंगुणविशिष्टो महाश्चर्यकारी शुकस्तिष्ठति । तया च श्रुत्वोत्पन्नकौतुका त्वद्ग्रहणाय बहव एवापरे मादृशाः समादिष्टाः । तदद्य पुण्यैर्मयासादितोऽसि । तदहं तत्पादमूलं त्वां प्रापयामि । बन्धे मोक्षे चाधुना सा प्रभवतीति ।

( द्वितीयः परिच्छेदः )

अहं तु तच्छ्रुत्वा मुक्ताशनिनेव ताडितः शिरसि संविभ्रान्तरात्मा

चेतस्यकरवम् । अहो मे मन्दपुण्यस्य दारुणतरः कर्मणां विपाको येन मया सुरासुरशिरःशेखराभ्यर्चितचरणसरसिजायाः श्रियो जातेन जगत्त्रयनमस्यस्य महामुनेः श्वेतकेतोः स्वहस्तसंवर्धितेन दिव्यलोकाश्रमनिवासिना भूत्वा म्लेच्छजातिभिरपि दूरतः परिहृतप्रवेशमधुना पक्कणं प्रवेष्टव्यं चण्डालैश्च सहैकत्र स्थातव्यम् । चरन्मातङ्गाङ्गनाकरोपनीतैः कवलैरात्मा पोषणीयः । चण्डालबालकजनस्य क्रीडनीयेन भावितव्यम् । दुरात्मन् पुण्डरीकहतक । धिग्जन्मलाभं ते यस्य कर्मणामयमीदृशः परिणामः । किमर्थं प्रथमगर्भ एव न सहस्रधा शीर्णोऽसि । मातः श्रीरशरणजनशरणचरणपङ्कजे अतिगहनभीषणाद्रक्ष मामस्मान्महानरकपातात् । तात भुवनत्रयत्राणक्षम त्रायस्व कुलतन्तुमेकम् । त्वयैव संवार्धितोऽस्मि । वयस्य कपिञ्जल यदि परापत्य त्वयास्मात्पापान्न मोचितोऽस्मि तदा जन्मान्तरेऽपि पुनर्मा कृथा मत्समागमप्रत्याशामिति । एतानि चान्यानि च चेतसा विलप्य पुनस्तमभ्यर्थनादीनमवदम् । भद्रमुख जातिस्मरो मुनिरस्मि जात्या । तत्त्वापि मामस्मान्महतः पापसंकटादुद्धृत्य धर्मो भवेदेवादृष्टसुखहेतुः । तन्मुञ्चतु मां भद्रमुखः । इत्यभिदधानश्च पादयोरपतम् । स तु विहस्य मामादाय पक्कणाभिमुखमगच्छत् । अहं तु तेन तद्वचसाभिहतः इव मूर्ध्नि मूकतामापन्नः केषां पुनः कर्मणामिदं मे फलमित्यन्तरात्मनाभिध्यायन् प्राणपरित्यागं प्रति कृतनिश्चयोऽभवम् । नीयमानश्च तथा तेन तन्मोचनप्रत्याशयैवाग्रतो दत्तदृष्टिर्हस्तस्थितसकाण्डकोदण्डैः प्रासप्रचण्डपाणिभिश्चण्डालशिशुभिर्वृन्दशो दिशि दिशि मृगयां क्रीडद्भिर्दूरत एवावेष्ट्यमानं सर्वतः करङ्कप्रायवृतिवाटमास्थिप्रायरथ्यावकरकूटमुत्कृत्तमांसमेदोवसासृक्कर्दमप्रायकुटीराजिरमाखेटकप्रायाजीवं पिशितप्रायाशनं कौशेयप्रायपरिधानं चर्मप्रायास्तरणं सारमेयप्रायपरिवारमाकरमिव सर्वनरकाणां कारणमिव सर्वाकुशलानां सन्निवेश इव सर्वश्मशानानामापच्चनमिव सर्वपापाना-

मायतनमिव सर्वयातनानां स्मर्यमाणमपि भयंकरं श्रूयमाणमप्युद्वेगकरं दृश्यमानमपि पापजननं जन्मकर्मतो मलिनतरजनं पुण्यकर्मैकापणं पक्कणमपश्यम् ।

( तृतीयः परिच्छेदः )

दृष्ट्वा च तं तादृशं नरकवासिनोऽप्युद्वेगकरं समुत्पन्नघृणोऽन्तरात्मन्यकरवम्—अपि नाम सा चाण्डालदारिका दूरत एव मामालोक्योत्पन्नकरुणा मोचयेन्न जातिसदृशमाचरिष्यति । भविष्यन्त्येवंविधानि मे पुण्यानि । न निमेषमप्यत्र पदं कुर्यामित्येवं कृताशंसमेव मां नीत्वा स चण्डालस्तदा दुर्दर्शनाकारवेषायै दूरतः स्थितः प्रणम्यैष स मया प्राप्त इति तस्यै चण्डालदारिकायै दर्शितवान् । सा तु प्रहृष्टतरवदना शोभनं कृतमिति तमभिधाय तत्करात् स्वकरयुगेनादाय मां, आः पुत्रक प्राप्तोऽसि सांप्रतं क्वापरं गम्यते । व्यपनयामि ते सर्वमिदं कामचरितमित्याभिदधानैव चण्डालबालकोपनीते दृढबद्धदारुमयपानभोजनपात्रेऽर्धश्यानलोमशदुर्गन्धिगोचर्मावनद्धे मनागुद्घाटितद्वारे दारुपञ्जरे समं महाश्वेतावलोकनमनोरथैराक्षिप्यार्गलितद्वारा सा मामवदत् । यथा, अत्र निर्वृतः संप्रति तिष्ठ । इत्यभिधाय तूष्णीमस्थात् । अहं तु तथा संरुद्धश्चेतस्यकरवम्—महासंकटे पतितोऽस्मि । यदि तावदावेदितात्मावस्थः शिरसा प्रणिपत्य मुक्तये विज्ञापयाम्येनां तदा य एव मे गुणो दोषतामापद्य बन्धायोपजातः स एव संवर्धितो भवति । साधु जल्पतीत्येवाहमनया ग्राहितः । कास्या मदीयया बन्धपीडया पीडा । नाहमस्यास्तनयो न भ्राता न बन्धुः । अथ मौनमालम्ब्य तिष्ठामि । तत्रापि शाठ्यप्रकुपिता कदाचिदतोप्यधिकामवस्थां प्रापयति माम् । नृशंसतमा हि जातिरियम् । अथवा वरमितोऽप्यधिकमुपजातं न पुनश्चण्डालैः सह वागपि विमिश्रिता । अपि च गृहीतमौनं निर्वेदात् कदाचिन्मुञ्चत्येव । वदंस्तु पुनर्न मोक्तव्य एवाहमनया । अपि

च यद्दिव्यलोकभ्रंशो यन्मर्त्यलोके जन्म यत्तिर्यग्जातौ पतनं यच्चण्डाल-हस्तागमनं यच्चेदमेवंविधं पञ्जरबन्धदुःखं सर्व एवायमनियतेन्द्रियत्व-स्यैव दोषः । तत् किमेकया वाचा । सर्वेन्द्रियाण्येव नियमयामीति निश्चित्य मौनग्रहणमकरवम् । आलप्यमानोऽप्यातर्ज्यमानोऽप्याहन्य-मानोऽपि त्रुट्यमानोऽपि च बलान्न किंचिदप्यवदम् । केवलमुच्चैश्ची-त्कारमेवामुञ्चम् । उपनीतेऽपि च पानाशने तं दिवसमनशनेनै-वात्यवाहयम् ।

( चतुर्थः परिच्छेदः )

अन्येद्युश्चातिक्रामत्यशनकाले मे दूयमाने हृदये च सा स्वपाणि-नोपनीय नानाविधानि पक्वान्यपक्वानि च फलानि सुरभि शीतलं च पानीयमप्रतिपन्नतदुपभोगं मामारोपितलोचना स्निह्यन्तीवावोचत्—क्षुत्पि-पासार्दितानां हि पशुपक्षिणां निर्विचारचित्तवृत्तीनामुपनतेष्वाहारेष्व-नुपयोगो न संभवत्येव । तद्यद्येवंविधस्त्वं कोऽपि भोज्याभोज्यविवेक-कारी पूर्वजातिस्मरोऽस्मदीयमाहारं परिहरसि तथापि तावद्भक्ष्या-भक्ष्यविवेकरहितायां तिर्यग्जातौ वर्तमानस्य ते किं वाऽभक्ष्यम् । येन चोत्कृष्टतमां जातिं प्राप्यात्मनैवेदृशं कर्म कृतं येन तिर्यग्योनौ पतितः स किमपरं विचारयसि । प्रथममेवात्मा न विवेके स्थापितः । अधुना स्वकर्मोपात्तजातिसदृशमाचरतस्ते नास्त्येव दोषः । अपि च येषामपि भक्ष्याभक्ष्यनियमोऽस्ति तेषामप्यापत्काले प्राणानां सन्धारणमभक्ष्यो-पयोगेनापि तावद्विहितम् । किं पुनस्त्वादृशस्य । न चेदृशं किञ्चिद-भ्याहाराय मयोपनीतं यादृशेन चण्डालाशनशङ्का समुत्पद्यते । फलानि तु ततोऽपि प्रतिगृह्यन्त एव । पानीयमपि चाण्डालभाण्डादपि भुवि पतितं पवित्रमेत्येवं जनः कथयति । तत्किमर्थमात्मानं क्षुधा पिपा-सया वा पातयसि । यन्न भक्षयस्यमूनि मुनिजनोचितानि वनफलानि न पिबसि वा पानीयमिति । अहं तु तेन तस्याश्चाण्डालजात्य-

नुचितेन वचसा विवेकेन च विस्मितान्तरात्मा तथेति प्रतिपद्य शापनिघ्नो घृणां परित्यज्य जीविततृष्णया क्षुत्पिपासोपशमायाशनक्रियामङ्गीकृतवानस्मि । मौनं तु पुनर्नात्याक्षम् ।

एवमतिक्रामति काले क्रमेण तरुणतामापन्ने मय्येकदा प्रभातायां च यामिन्यामुन्मीलितलोचनोऽद्राक्षमस्मिन् कनकपञ्जरे स्थितमात्मानम् । चाण्डालदारिका यादृशी तादृशी देवेनाऽपि दृष्टैव । सकलमेव तत् पक्कणममरपुरसदृमालोक्य चापगतचाण्डालवसतिसंवेगो विस्मितान्तरात्मा किमेतदिति कुतूहलात्प्रष्टुकामो यावन्न परित्यजाम्येव मौनं तावदेषा मामादाय देवपादमूलमायाता । तत् केयं किमर्थमनया चाण्डालताऽऽत्मनः ख्यापिता किमर्थं वाऽहं बद्धो वा किमर्थमिहानीत इत्यत्र वस्तुन्यहमपि देव इवानपगतकुतूहल एवेति ।

कादम्बरी ।

## ४६. यक्षमन्दिरम् ।

तत्रागारं धनपतिगृहानुत्तरेणास्मदीयं
दूराल्लक्ष्यं सुरपतिधनुश्चारुणा तोरणेन ।
यस्योपांते कृतकतनयः कांतया वर्धितो मे
हस्तप्राप्यस्तबकनमितो बालमन्दारवृक्षः ॥ १

वापी चास्मिन्मरकतशिलाबद्धसोपानमार्गा
हैमैश्छन्ना विकचकमलैः स्निग्धवैदूर्यनालैः ।
यस्यास्तोये कृतवसतयो मानसं संनिकृष्टं
नाध्यास्यंति व्यपगतशुचस्त्वामपि प्रेक्ष्य हंसाः ॥ २

तस्यास्तीरे रचितशिखरः पेशलैरिंद्रनीलैः
क्रीडाशैलः कनककदलीवेष्टनप्रेक्षणीयः ।
मद्गेहिन्याः प्रिय इति सखे चेतसा कातरेण
प्रेक्ष्योपांतस्फुरिततडितं त्वां तमेव स्मरामि ॥ ३

रक्ताशोकश्चलकिसलयः केसरश्चात्र कांतः
प्रत्यासन्नो कुरबकवृतेर्माधवीमंडपस्य ।
एकः सख्यास्तव सह मया वामपादाभिलाषी
कांक्षत्यन्यो वदनमदिरां दोहदच्छद्मनास्याः ॥ ४
तन्मध्ये च स्फटिकफलका कांचनी वासयष्टि-
र्मूले बद्धा मणिभिरनतिप्रौढवंशप्रकाशैः ।
तालैः शिंजावलयसुभगैर्नर्तितः कांतया मे
यामध्यास्ते दिवसविगमे नीलकंठः सुहृद्वः ॥ ५
एभिः साधो हृदयनिहितैर्लक्षणैर्लक्षयेथाः
द्वारोपांते लिखितवपुषौ शंखपद्मौ च दृष्ट्वा ।
क्षामच्छायं भवनमधुना मद्वियोगेन नूनं
सूर्यापाये न खलु कमलं पुष्यति स्वामभिख्याम् ॥ ६
गत्वा सद्यः कलभतनुतां शीघ्रसंपातहेतोः
क्रीडाशैले प्रथमकथिते रम्यसानौ निषण्णः ।
अर्हस्यंतर्भवनपतितां कर्तुमल्पाल्पभासं
खद्योतालीविलसितनिभां विद्युदुन्मेषदृष्टिम् ॥ ७

मेघदूतम् ।

---

## ४७. गीतावसाने महाश्वेतातिथये स्वागतं व्याहरति विदिततद्वृत्तान्ता च तेन साकं जलफलमूलमये-ष्वाहारेषु प्रणयं करोति ।

अथ गीतावसाने मूकीभूतवीणा प्रशान्तमधुकररुतेव कुमुदिनी सा कन्यका समुत्थाय प्रदाक्षिणीकृत्य कृतहरप्रणामा परिवृत्य स्वभावधवलया तपःप्रभावप्रगल्भया दृष्ट्या समाश्वासयन्तीव पुण्यैरिव स्पृशन्ती तीर्थज-

लैरिव प्रक्षालयन्ती तपोभिरिव पावयन्ती शुद्धिमिव कुर्वाणा वरप्रदान-मिवोपपादयन्ती चन्द्रापीडमाबभाषे। स्वागतमतिथये । कथमिमां भूमिम-नुप्राप्तो महाभागः । तदुत्तिष्ठ। आगम्यताम्। अनुभूयतामतिथिसत्कार इति । एवमुक्तस्तु तया संभाषणमात्रेणानुगृहीतमात्मानं मन्यमान उत्थाय भक्त्या कृतप्रणामो भगवति यथाज्ञापयसीत्यभिधाय दर्शितविनयः शिष्य इव तां व्रजन्तीमनुवव्राज । व्रजंश्च समर्थ-यामास, हन्त तावन्नेयं मां दृष्ट्वा तिरोभूता । कृतं हि मे कुतूहलेन प्रश्नाशया हृदि पदम्। यथा चेयमस्यास्तपस्विजनदुर्लभ-दिव्यरूपाया अपि दाक्षिण्यातिशया प्रतिपत्तिरभिजाता विभाव्यते तथा संभावयामि नियतमियमखिलमात्मोदन्तमभ्यर्थ्यमाना मया कथ-यिष्यतीत्येवं च कृतमतिः पदशतमात्रमिव गत्वा गुहामेकामद्राक्षीत्। तस्याश्च द्वारि शिलातले समुपविष्टो वल्कलशयनशिरोभागविन्यस्त-वीणां ततः पर्णपुटेन निर्झरादागृहीतमर्घजलमादाय तां कन्यकां समु-पस्थितामलमतियन्त्रणया कृतमतिप्रसादेन भगवति प्रसीद विमुच्यता-मयमत्यादरस्त्वदीयमालोकनमपि सर्वपापप्रशमनमघमर्षणमिव पवित्री-करणायालमास्यतामित्यब्रवीत्। अनुबध्यमानश्च तया तां सर्वामतिथि-सपर्यामतिदूरावनतेन शिरसा सप्रश्रयं प्रतिजग्राह । कृतातिथ्यया च तया द्वितीयशिलातलोपविष्टया क्षणमिव तूष्णीं स्थित्वा क्रमेण परिपृष्टो दिग्विजयादारभ्य किन्नरमिथुनानुसरणप्रसङ्गेनागमनमात्मनः स-र्वमाचचक्षे । विदितसकलवृत्तान्ता चोत्थाय सा कन्यका भिक्षाक-पालमादाय तेषामायतनतरूणां तलेषु विचचार । अचिरेण च तस्याः स्वयंपतितैः फलैरपूर्यत भिक्षाभाजनम्। आगत्य च तेषां फलानामुपयोगाय नियुक्तवती चन्द्रापीडम्। आसीच्च तस्य चेतसि नास्ति खल्वसाध्यं नाम तपसाम्। किमतः परमाश्चर्यं यत्र व्यपगत-चेतना अपि सचेतना इवास्यै भगवत्यै समतिसृजन्तः फलानि आ-

त्मानुग्रहमुत्पादयन्ति वनस्पतयः । चित्रमिदमस्माभिरालोकितमदृष्टपूर्वमित्यधिकतरोपजातविस्मयश्चोत्थाय तमेव प्रदेशमिन्द्रायुधमानीय व्यपनीतपर्याणं नातिदूरे संयम्य निर्झरजलनिर्वर्तितस्नानविधिस्तान्यमृतस्वादून्युपभुज्य फलानि पीत्वा च तुषारशिशिरं प्रस्रवणजलमुपस्पृश्य चैकान्ते तावदवतस्थे यावत्तयापि कन्यकया कृतो जलफलमूलमयेष्वाहारेषु प्रणयः ।

कादम्बरी ।

---

## ४८. मृगयाविहारी दुष्यन्तः कण्वाश्रमं प्राप्तः ।

( ततः प्रविशति मृगानुसारी सशरचापहस्तो राजा रथेन सूतश्च । )

**सूतः**–( राजानं मृगं चावलोक्य । ) आयुष्मन् ।

कृष्णसारे ददच्चक्षुस्त्वयि चाधिज्यकार्मुके ।
मृगानुसारिणं साक्षात्पश्यामीव पिनाकिनम् ॥ १

**राजा**–सूत दूरममुना सारङ्गेण वयमाकृष्टाः । अयं पुनरिदानीमपि

ग्रीवाभङ्गाभिरामं मुहुरनुपतति स्यंदने दत्तदृष्टिः
पश्चार्धेन प्रविष्टः शरपतनभयाद्भूयसा पूर्वकायम् ।
दर्भैरर्धावलीढैः श्रमविवृतमुखभ्रंशिभिः कीर्णवर्त्मा
पश्योदग्रप्लुतत्वाद्वियति बहुतरं स्तोकमुर्व्यां प्रयाति ॥ २

( सविस्मयम् ) तदेष कथमनुपतत एव मे प्रयत्नप्रेक्षणीयः संवृत्तः ।

**सूतः**–आयुष्मन्, उत्खातिनी भूमिरिति मया रश्मिसंयमनाद्रथस्य मन्दीकृतो वेगः । तेन मृग एष विप्रकृष्टान्तरः । संप्रति समदेशवर्तिनस्ते न दुरासदो भविष्यति ।

**राजा**–तेन हि मुच्यन्तामभीषवः ।

**सूतः**–यदाज्ञापयत्यायुष्मान् । (रथवेगं निरूप्य) आयुष्मन् पश्य पश्य

मुक्तेषु रश्मिषु निरायतपूर्वकाया निष्कंपचामरशिखा निभृतोर्ध्वकर्णाः ।
आत्मोद्धतैरपि रजोभिरलङ्घनीया धावन्त्यमी मृगजवाक्षमयेव रथ्याः ॥ ३

**राजा**—सत्यम् । अतीत्य हरितो हरींश्च वर्तन्ते वाजिनः । तथाहि

यदालोके सूक्ष्मं व्रजति सहसा तद्विपुलतां
यदर्धे विच्छिन्नं भवति कृतसन्धानमिव तत् ।
प्रकृत्या यद्वक्रं तदपि समरेखं नयनयो-
र्न मे दूरे किंचित् क्षणमपि न पार्श्वे रथजवात् ॥ ४

सूत पश्यैनं व्यापाद्यमानम् ( इति शरसन्धानं नाटयति )

( नेपथ्ये )

भो भो राजन् आश्रममृगोऽयं न हन्तव्यो न हन्तव्यः ।

**सूतः**—( आकर्ण्यावलोक्य च ) आयुष्मन्, अस्य खलु मे बाणपथवर्तिनः कृष्णसारस्यान्तरे तपस्विन उपस्थिताः ।

**राजा**—( ससंभ्रमम् ) तेन हि प्रगृह्यन्तां वाजिनः ।

**सूतः**—तथा ( इति रथं स्थापयति )

( ततः प्रविशत्यात्मनातृतीयो वैखानसः )

**वैखानसः**—( हस्तमुद्यम्य ) राजन्, आश्रममृगोऽयं न हन्तव्यो न हन्तव्यः ।

न खलु न खलु बाणः सन्निपात्योऽयमस्मिन्
मृदुनि मृगशरीरे पुष्पराशाविवाग्निः ।
क्व बत हरिणकानां जीवितं चातिलोलं
क्व च निशितनिपाता वज्रसाराः शरास्ते ॥ ५

तत्साधुकृतसन्धानं प्रतिसंहर सायकम् ।
आर्तत्राणाय वः शस्त्रं न प्रहर्तुमनागसि ॥

**राजा**—एष प्रतिसंहृतः । ( इति यथोक्तं करोति )

**वैखानसः**—सदृशमेतत् पुरुवंशप्रदीपस्य भवतः ।

जन्म यस्य पुरोर्वंशे युक्तरूपमिदं तव ।
पुत्रमेवंगुणोपेतं चक्रवर्तिनमाप्नुहि ॥ ६

**इतरौ**–( बाहू उद्यम्य ) सर्वथा चक्रवर्तिनं पुत्रमाप्नुहि ।

**राजा**–( सप्रणामम् ) प्रतिगृहीतम् ।

**वैखानसः**–राजन् समिदाहरणाय प्रस्थिता वयम् । एष खलु कण्वस्य कुलपतेरनुमालिनीतीरमाश्रमो दृश्यते । न चेदन्यकार्यातिपातः प्रविश्य प्रतिगृह्यतामातिथेयः सत्कारः । अपि च ।

रम्यास्तपोधनानां प्रतिहतविघ्नाः क्रियाः समवलोक्य ।
ज्ञास्यसि कियद्भुजो मे रक्षति मौर्वीकिणाङ्क इति ॥ ७

**राजा**—अपि सन्निहितोऽत्र कुलपतिः ।

**वैखानसः**—इदानीमेव दुहितरं शकुन्तलामतिथिसत्काराय नियुज्य दैवमस्याः प्रतिकूलं शमयितुं सोमतीर्थं गतः ।

**राजा**—भवतु । तामेव पश्यामि । सा खलु विदितभक्तिं मां महर्षेः करिष्यति ।

**वैखानसः**—साधयामस्तावत् [ इति सशिष्यो निष्क्रान्तः ]

**राजा**—सूत चोदयाश्वान् । पुण्याश्रमदर्शनेन तावदात्मानं पुनीमहे ।

**सूतः**—यदाज्ञापयत्यायुष्मान् । [ इति भूयो रथवेगं निरूपयति ]

**राजा**—[ समन्तादवलोक्य ] सूत, अकथितोऽपि ज्ञायत एव यथायमाश्रमाभोगस्तपोवनस्येति ।

**सूतः**—कथमिव ।

**राजा**—किं न पश्यति भवान् । इह हि,

नीवाराः शुकगर्भकोटरमुखभ्रष्टास्तरूणामधः
प्रस्निग्धाः क्वचिदिङ्गुदीफलभिदः सूच्यन्त एवोपलाः ।
विश्वासोपगमादभिन्नगतयः शब्दं सहन्ते मृगा-
स्तोयाधारपथाश्च वल्कलशिखानिष्यन्दरेखाङ्किताः ॥ ८

**सूतः**—सर्वमुपपन्नम् ।

**राजा**—( स्तोकमन्तरं गत्वा ) तपोवननिवासिनामुपरोधो मा भूत् । एतावत्येव रथं स्थापय यावदवतरामि ।

**सूतः**—धृताः प्रग्रहाः । अवतरत्वायुष्मान् ।

**राजा**—( अवतीर्य ) सूत विनीतवेषेण प्रवेष्टव्यानि तपोवनानि नाम । इदं तावद्गृह्यताम् । ( इति सूतस्याभरणानि धनुश्चोपनीयार्पयति ) सूत यावदाश्रमवासिनः प्रत्यवेक्ष्याहमुपावर्ते तावदार्द्रपृष्ठाः क्रियन्तां वाजिनः ।

**सूतः**—तथा । ( इति निष्क्रान्तः )

अभिज्ञानशाकुन्तलम् ।

---

## ४९. संकीर्णपद्यानि ।

पंगो वंद्यस्त्वमसि न गृहं यासि योऽर्थी परेषां
धन्योऽन्ध त्वं धनमदवतां नेक्षसे यन्मुखानि ।
श्लाघ्यो मूक त्वमसि कृपणं स्तौषि नार्थाशया यः
स्तोतव्यस्त्वं बधिर न वचो यः खलानां शृणोषि ॥ १

आयातो भवतः पितेति सहसा मातुर्निशम्योदितं
धूलीधूसरितो विहाय शिशुभिः क्रीडारसान् प्रस्तुतान् ॥
दूरात्स्मेरमुखः प्रसार्य ललितं बाहुद्वयं बालको
नाधन्यस्य पुरः समेति परया प्रीत्या रटद्घर्घरम् ॥ २

विरम विरम वह्ने मुञ्च धूमानुबन्धं
प्रकटयसि किमुच्चैरर्चिषां चक्रवालम् ।
विरहहुतभुजाहं यो न दग्धः प्रियायाः
प्रलयदहनभासा तस्य किं त्वं करोषि ॥ ३

मुखं तस्याः स्मितस्मेरं किंचिदञ्चलसंवृतम् ।
मदालोकनलोलाक्षं स्मृत्वा मन्ये सुधां मुधा ॥ ४

बृहत्सहायः कार्यान्तं क्षोदीयानपि गच्छति
संभूयाम्भोधिमभ्येति महानद्या नगापगा ॥ ५

विधाय वैरं सामर्षे नरोऽरौ य उदासते ।
प्रक्षिप्योदर्चिषं कक्षे शेरते तेऽभिमारुतम् ॥ ६

स्वस्त्यस्तुविद्रुमलतासुमनोमणिभ्यः ।
कल्याणिनी भवतु मौक्तिकशुक्तिपंक्तिः ।
प्राप्तं मया सकलमेव फलं पयोधे-
र्यद्दारुणैर्जलचरैर्न विदारितोऽस्मि ॥ ७

समूलघातमघ्नंतः परान्नोद्यन्ति मानिनः ।
प्रध्वंसितान्धतमसस्तत्रोदाहरणं रविः ॥ ८

व्रजन्ति ते मूढधियः पराभवं, भवन्ति मायाविषु ये न मायिनः ।
प्रविश्य हि घ्नन्ति शठास्तथाविधानसंवृताङ्गान् निशिता इवेषवः ९

दिवि वा भुवि वा ममास्तु वासो, नरके वा नरकान्तक प्रकामम् ।
अवधीरितशारदारविन्दौ, चरणौ ते मरणेऽपि चिन्तयामि ॥ १०

ये संसत्सु विवादिनः परयशःशल्येन शूलाकुलाः
कुर्वन्ति स्वगुणस्तवेन गुणिनां यत्नाद् गुणाच्छादनम् ।
तेषां रोषकषायितोदरदृशां कोपोष्णनिःश्वासिनां
दीप्ता रत्नशिखेव कृष्णफणिनां विद्या जनोद्वेजिनी ॥ ११

यत्पादाः शिरसा न केन विधृताः पृथ्वीभृतां मध्यत-
स्तस्मिन् भास्वति राहुणा कवलिते लोकत्रयीचक्षुषि ।
खद्योतैः स्फुरितं तमोभिरुदितं ताराभिरुज्जृंभितं
घूकैरुत्थितमाः किमत्र करवै किं केन नो चेष्टितम् १२

अच्छासु हंस इव बालमृणालिकासु
भृङ्गो नवास्विव मधुद्रुममञ्जरीषु ।
कोऽवन्तिभर्तुरपरो रसनिर्भरासु
पृथ्वीपतिः सुकविसूक्तिषु बद्धभावः ॥ १३

आशाः प्रोज्झितदिग्गजा इव गुहा प्रध्वस्तसिंहा इव
द्रोण्यः कृत्तमहाद्रुमा इव भुवः प्रोत्खातशैला इव ।
बिभ्राणाः क्षयकालरिक्तसकलत्रैलोक्यकष्टां दशां
जाताः क्षीणमहारथाः कुरुपतेर्दैवस्य शून्याः समाः ॥ १४

देवीं वाचमुपासते हि बहवः सारं तु सारस्वतं
जानीते नितरामसौ गुरुकुलक्लिष्टो मुरारिः कविः ।
अब्धिर्लंघित एव वानरभटैः किं त्वस्य गम्भीरता–
मापातालनिमग्नपीवरतनुर्जानाति मन्थाचलः १५

सव्याधेः कृशता क्षतस्य रुधिरं दष्टस्य लालास्रुतिः
किञ्चिन्नैतदिहास्ति तत्कथमसौ पान्थस्तपस्वी मृतः ।
आ ज्ञातं मधुलम्पटैर्मधुकरैरारब्धकोलाहले
नूनं साहसिकेन चूतमुकुले दृष्टिः समारोपिता ॥ १६

रामो नाम बभूव हुं तदबला सीतेति हुं तां पितु–
र्वाचा पञ्चवटीवने निवसतस्तस्याहरद्रावणः ।
कृष्णेनेति पुरातनीं निजकथामाकर्ण्य मात्रेरितां
सौमित्रे क्व धनुर्धनुर्धनुरिति प्रोक्ता गिरः पान्तु वः ॥ १७

जन्मस्थानं न खलु विमलं वर्णनीयो न वर्णः
दूरात्पुंसां वपुषि रचना पङ्कशङ्कां करोति ।
यद्यप्येवं सकलसुरभिद्रव्यगर्वापहारी
को जानीते परिमलगुणः कोऽपि कस्तूरिकायाः ॥ १८

वाता वान्तु कदम्बरेणुशबला नृत्यन्तु सर्पद्विषः
सोत्साहा नववारिभारगुरवो मुञ्चन्तु नादं घनाः ।
मग्नां कान्तवियोगशोकजलधौ मां वीक्ष्य दीनाननां
विद्युत् किं स्फुरसि त्वमप्यकरुणे स्त्रीत्वे समाने सति ॥ १९

कृष्णेनाम्ब गतेन रन्तुमधुना मृद्भक्षिता स्वेच्छया
सत्यं कृष्ण क एवमाह मुसली मिथ्याम्ब पश्याननम् ।
व्यादेहीति विकासितेऽथ वदने माता समस्तं जगद्
दृष्ट्वा यस्य जगाम विस्मयवशं पायात् स वः केशवः ॥ २०

किं कवेस्तस्य काव्येन किं काण्डेन धनुष्मतः ।
परस्य हृदये लग्नं न घूर्णयति यच्छिरः ॥ २१

स्पृहणीयाः कस्य न ते सुमतेः सरलाशया महात्मानः
त्रयमपि येषां सदृशं हृदयं वचनं तथाचारः ॥ २२

आदौ तु मन्दमन्दानि मध्ये समरसानि च ।
अन्ते स्नेहायमानानि संगतानि बुधैः सह । २३

शमयति यशः क्लेशं सूते दिशत्यशिवां गतिं
जनयति जनोद्वेगायासं नयत्युपहास्यताम् ।
भ्रमयति मतिं मानं हन्ति क्षिणोति च जीवितं
क्षिपति सकलं कल्याणानां कुलं खलसंगमः ॥ २४

वरममी तरवो वनगोचराः, शकुनिसार्थविलुप्तफलश्रियः ।
न तु धनाढ्यगृहाः कृपणाः फणानिहितरत्नभुजंगमवृत्तयः ॥ २५

केलिं कुरुष्व परिभुंक्ष्व सरोरुहाणि
गाहस्व शैलतटनिर्झरिणीपयांसि ।
भावानुरक्तकरिणीकरलालिताङ्ग
मातङ्ग मुञ्च मृगराजरणाभिलाषम् ॥ २६

नीवारप्रसवाग्रमुष्टिकवलैर्यो वर्धितः शैशवे
पीतं येन सरोजपत्रपुटके होमावशेषं पयः ।
तं दृष्ट्वा मदमन्थरालिवलयव्यालुप्तगण्डं गजं
सोत्कण्ठं समयं च पश्यति मुहुर्दूरे स्थितस्तापसः ॥ २७

हे सारंग तृणान्यशान सलिलैः प्राणान् पुषाणाथवा
यद्वा स्याः पवनाशनस्तदपि ते साविष्कृति प्राणितम् ।
येनेयं भवतोच्छ्वसत्कुवलयप्रस्तारचारुद्युति–
र्दृष्टिर्वित्तमदोद्धताक्षिणि मुखे मूर्खस्य नायासिता ॥ २८

त्यक्तं जन्मवनं तृणांकुरवती मातेव मुक्ता स्थली
विस्रम्भस्थितिहेतवो न गणिता बन्धूपमाः पादपाः ।
बालापत्यवियोगदुःखविधुरा नापेक्षिता सा मृगी
मार्गन्तः पदवीं तथाप्यकरुणा व्याधा न मुचन्त्यमी ॥ २९

छित्त्वा पाशमपास्य कूटरचनां भङ्क्त्वा बलाद्वागुरां
पर्यस्ताग्निशिखाकलापजटिलान्निर्गत्य दूरं वनात् ।
व्याधानां शरगोचरादपि जवेनोत्प्लुत्य धावन् मृगः
कूपान्तःपतितः करोति विधुरे किं वा विधौ पौरुषम् ॥ ३०

किं वा न संति नवतामरसावतंसा
हंसावलीवलयिनो जलसन्निवेशाः ।
कोऽपि ग्रहो गुरुरयं बत चातकस्य
पौरन्दरीं यदभिवाञ्छति वारिधाराम् ॥ ३१

येनामोदिनि केसरस्य मुकुले पीतं मधु स्वेच्छया ।
नीता येन निशा शशाङ्कधवला पद्मोदरे शारदे ।
भ्रान्तं येन मदप्रवाहमलिने गण्डस्थले दन्तिनां ।
सोऽयं भृंगयुवा करीरविटपे बध्नातु तुष्टिं कुतः ॥ ३२

प्रतिकूलतामुपगते हि विधौ विफलत्वमेति बहुसाधनता ।
अवलम्बनाय दिनभर्तुरभून्न पतिष्यतः करसहस्रमपि ॥ ३३

वितरति गुरुः प्राज्ञे विद्यां यथैव तथा जडे ।
न तु खलु तयोर्ज्ञाने शक्तिं करोत्यपहन्ति वा ।
भवति च पुनर्भूयान् भेदः फलं प्रति तद्यथा
प्रभवति शुचिर्बिम्बोद्ग्राहे मणिर्न मृदां चयः ॥ ३४

अयि दलदरविन्द स्यन्दमानं मरन्दं
तव किमपि लिहन्तो मञ्जु गुञ्जन्तु भृगाः ।
दिशि दिशि निरपेक्षस्तावकीनं विवृण्वन्
परिमलमयमन्यो बान्धवो गन्धवाहः ॥ ३५

कमलिनि मलिनीकरोषि चेतः किमिति बकैरवहेलितानभिज्ञैः ।
परिणतमकरन्दमार्मिकास्ते जगति भवन्तु चिरायुषो मिलिन्दाः ॥ ३६

दिगन्ते श्रूयन्ते मदमलिनगण्डाः करटिनः ।
करिण्यः कारुण्यास्पदमसमशीलाः खलु मृगाः ।
इदानीं लोकेऽस्मिन्ननुपमशिखानां पुनरयं
नखानां पांडित्यं प्रकटयतु कस्मिन् मृगपतिः ॥ ३७

न यत्र स्थेमानं दधुरतिभयभ्रान्तनयना
गलद्दानोद्रेकभ्रमदलिकदम्बाः करटिनः ।
लुठन्मुक्ताभारे भवति परलोकं गतवतो
हरेरद्य द्वारे शिव शिव शिवानां कलकलः ॥ ३८

पुरा सरसि मानसे विकचसारसालिस्खलत्-
परागसुरभीकृते पयसि यस्य यातं वयः ।
स पल्वलजलेऽधुना मिलदनेकभेकाकुले
मरालकुलनायकः कथय रे कथं वर्तताम् ॥ ३९

गिरिगह्वरेषु गुरुगर्वगुंफितो गजराजपोत न कदापि संचरेः ।
यदि बुध्यते हरिशिशुः स्तनंधयो भविता करेणुपरिशेषिता मही ॥ ४०

पिब स्तन्यं पोत त्वमिह मददन्तावलधिया
दृगन्तानाधत्से किमिति हरिदन्तेषु परुषान् ।
त्रयाणां लोकानामपि हृदयतापं परिहर-
न्नयं धीरं धीरं ध्वनति नवनीलो जलधरः ॥ ४१

व्यतिषजति पदार्थानान्तरः कोऽपि हेतु-
र्न खलु बहिरुपाधीन् प्रीतयः संश्रयन्ते ।
विकसति हि पतङ्गस्योदये पुण्डरीकं
द्रवति च हिमरश्मावुद्गते चन्द्रकान्तः ॥ ४२

स्तिमितविकसितानामुल्लसद्भ्रूलतानां
मसृणमुकुलितानां प्रान्तविस्तारभाजाम् ।
प्रतिनयननिपाते किंचिदाकुञ्चितानां
विविधमहमभूवं पात्रमालोकितानाम् ॥ ४३

परिच्छेदव्यक्तिर्न भवति पुरःस्थेऽपि विषये
भवत्यभ्यस्तेऽपि स्मरणमतथाभावविरसम् ।
न सन्तापच्छेदो हिमसरसि वा चन्द्रमसि वा
मनो निष्ठाशून्यं भ्रमति च किमप्यालिखति च ॥ ४४

राज्यं येन पटान्तलग्नतृणकं त्यक्तं गुरोराज्ञया
पाथेयं परिगृह्य कार्मुकवरं घोरं वनं प्रस्थितः ।
स्वाधीनः शशिमौलिचापविषये प्राप्तो न वै विक्रियां
पायाद्वः स बिभीषणाग्रजनिहा रामाभिधानो हरिः ॥ ४५

प्राक् पादयोः पतति खादति पृष्ठमांसं कर्णे कलं किमपि रौति शनैर्विचित्रम् ।
छिद्रं निरूप्य सहसा प्रविशत्यशङ्कः सर्वं खलस्य चरितं मशकः करोति ४६

गीतं कोकिल ते मुदा रसविदः शृण्वन्ति कर्णामृतं
नो किंचिद्वितरन्ति ते तरुदलैरेव स्वयं जीवसि ।
कर्णायुर्हरमुद्गिरन्ति विरुतं काकास्तु तेभ्यो बलिं
प्रज्ञा एव दिशन्ति हन्त धिगिदं वक्रं विधेः क्रीडितम् ॥४७

अयं मार्तण्डः किं स खलु तुरगैः सप्तभिरितः
कृशानुः किं सर्वाः प्रसरति दिशो नैष नियतंम् ।
कृतान्तः किं साक्षान्महिषवहनोऽसाविति चिरं
समालोक्याजौ त्वां विदधति विकल्पान् प्रतिभटाः ॥४८॥

इयं गेहे लक्ष्मीरियममृतवर्तिर्नयनयो–
रसावस्याः स्पर्शो वपुषि बहलश्चन्दनरसः ।
अयं कण्ठे बाहुः शिशिरमसृणो मौक्तिकसरः
किमस्या न प्रेयो यदि परमसह्यस्तु विरहः ॥ ४९

शैशवात्प्रभृति पोषितां प्रियां सौहृदादपृथगाश्रयामिमाम् ।
छद्मना परिददामि मृत्यवे सौनिको गृहशकुन्तिकामिव ॥ ५०

विश्रम्भादुरसि निपत्य लब्धनिद्रामुन्मुच्य प्रियगृहिणीं गृहस्य शोभाम् ।
आतङ्कस्फुरितकठोरगर्भगुर्वीं क्रव्याद्भ्यो बलिमिव निर्घृणः क्षिपामि ॥५१

चांचल्यमुच्चैःश्रवसस्तुरंगात् कौटिल्यमिन्दोर्विषतो विमोहः ।
इति श्रियाऽशिक्षि सहोदरेभ्यो जाने न कस्माद्गुणवद्विरोधः ॥ ५२

मही रम्या शय्या विपुलमुपधानं भुजलता
वितानं चाकाशं व्यजनमनुकूलोऽयमनिलः ।
स्फुरद्दीपश्चन्द्रो विरतिवनितासङ्गमुदितः
सुखं शान्तः शेते मुनिरतनुभूतिर्नृप इव ॥ ५३

शय्या शैलशिला गृहं गिरिगुहा वस्त्रं तरूणां त्वचः
सारङ्गाः सुहृदो ननु क्षितिरुहां वृत्तिः फलैः कोमलैः ।
येषां नैर्झरमम्बु पानमुचितं रत्यै च विद्याङ्गना

मन्ये ते परमेश्वराः शिरसि यैर्बद्धो न सेवाञ्जलिः ॥ ५४
व्याघ्रीव तिष्ठति जरा परितर्जयन्ती
रोगाश्च शत्रव इव प्रहरन्ति देहम् ।
आयुः परिस्रवति भिन्नघटादिवाम्भो
लोकस्तथाप्यहितमाचरतीति चित्रम् ॥ ५५
पुराणमित्येव न साधु सर्वं न चापि काव्यं नवमित्यवद्यम्
सन्तः परीक्ष्यान्यतरद्भजन्ते मूढः परप्रत्ययनेयबुद्धिः ॥ ५६
पौरैरंगुलिभिर्नवेन्दुवदहं निर्दिश्यमानः शनै-
र्यो राजेव पुरा पुरान्निरगमं राज्ञां सहस्रैर्वृतः ।
भूयः संप्रति सोऽहमेव नगरे तत्रैव वन्ध्यश्रमो
जीर्णोद्यानकमेष तस्कर इव त्रासाद्विशामि द्रुतम् ॥ ५७
सौमित्रे ननु सेव्यतां तरुतलं चण्डांशुरुज्जृम्भते
चण्डांशोर्निशि का कथा रघुपते चन्द्रोऽयमुन्मीलति ।
वत्सैतद्विदितं कथं नु भवता धत्ते कुरङ्गं यतः
क्वासि प्रेयसि हा कुरङ्गनयने चन्द्रानने जानकि ॥ ५८
किं जन्मना च महता पितृपौरुषेण
शक्त्या हि याति निजया पुरुषः प्रतिष्ठाम् ।
कुंभा न कूपमपि शोषयितुं समर्थाः
कुंभोद्भवेन मुनिनाऽम्बुधिरेष पीतः ॥ ५९
अत्तुं वांछति वाहनं गणपतेराखुं क्षुधार्तः फणी ।
तं च क्रौंचपतेः शिखी च गिरिजासिंहोऽपि नागाननम् ।
गौरी जह्नुसुतामसूयति कलानाथं कपालानलो
निर्विण्णः स पपौ कुटुंबकलहादीशोपि हालाहलम् ॥ ६०
स्पृष्टा येन शिरोरुहे नृपशुना पाञ्चालराजात्मजा ।
येनास्याः परिधानमप्यपहृतं राज्ञां कुरूणां पुरः ।

यस्योरःस्थलशोणितासवमहं पातुं प्रतिज्ञातवान्
सोऽयं मद्भुजपञ्जरे निपतितः संरक्ष्यतां कौरवाः ॥ ६१

अथ क्षमामेव निरस्तविक्रमश्चिराय पर्येषि सुखस्य साधनम् ॥
विहाय लक्ष्मीपतिलक्ष्म कार्मुकं जटाधरः सञ्जुहुधीह पावकम् ॥ ६२

अन्तःपुरेषु विहरन्नपि कीचक त्वं
सैरन्ध्रये स्पृहयसीति विचित्रमेतत् ।
रम्येषु कल्पकुसुमेषु चरन् द्विरेफो
रज्येत किं पितृवनद्रुमगुच्छिकायाम् ॥ ६३

हालाहलो नैव विषं विषं रमा जनाः परं व्यत्ययमत्र मन्वते ।
निपीय जागर्ति सुखेन तं शिवः स्पृशन्निमां मुह्यति निद्रया हरिः॥ ६४

किं नो व्याप्तदिशां प्रकम्पितभुवामक्षौहिणीनां फलं
किं द्रोणेन किमङ्गराजविशिखैरेवं यदि क्लाम्यसि ।
भीरु भ्रातृशतस्य मे भुजवनच्छायां सुखोपस्थिता
त्वं दुर्योधनकेसरीन्द्रगृहिणी शङ्कास्पदं किं तव ॥ ६५

चत्वारो वयमृत्विजः स भगवान् कर्मोपदेष्टा हरिः
संग्रामाध्वरदीक्षितो नरपतिः पत्नी गृहीतव्रता ।
कौरव्याः पशवः प्रियापरिभवक्लेशोपशान्तिः फलम् ।
राजन्योपनिमन्त्रणाय रसति स्फीतं हतो दुंदुभिः ॥ ६६

तुल्येऽपराधे स्वर्भानुर्भानुमन्तं चिरेण यत् ।
हिमांशुमाशु ग्रसते तन्म्रदिम्नः स्फुटं फलम् ॥ ६७

पद्मे मूढजने ददासि हि धनं विद्वत्सु किं मत्सरो
नाहं मत्सरिणी न चापि चपला नैवास्ति मूर्खे रतिः ।
मूर्खेभ्यो द्रविणं ददामि नितरां तत्कारणं श्रूयतां
विद्वान् सर्वजनेषु पूजिततनुर्मूर्खस्य नान्या गतिः ॥ ६८

गाहन्तां महिषा निपानसलिलं शृंगैर्मुहुस्ताडितं
छायाबद्धकदम्बकं मृगकुलं रोमन्थमभ्यस्यतु ॥
विश्रब्धं क्रियतां वराहपतिभिर्मुस्ताक्षतिः पल्वले
विश्रामं लभतामिदं च शिथिलज्याबन्धमस्मद्धनुः ॥ ६९

मेदश्छेदकृशोदरं लघु भवत्युत्थानयोग्यं वपुः
सत्त्वानामपि लक्ष्यते विकृतिमच्चित्तं भयक्रोधयोः ।
उत्कर्षः स च धन्विनां यदिषवः सिध्यन्ति लक्ष्ये चले
मिथ्यैव व्यसनं वदन्ति मृगयामीदृग्विनोदः कुतः ॥ ७०

अयि बत गुरुगर्वं मास्म कस्तूरि यासी-
रखिलपरिमलानां मौलिना सौरभेण ।
गिरिगहनगुहायां लीनमत्यन्तदीनं
स्वजनकममुनैव प्राणहीनं करोषि ॥ ७१

तत्त्वं किमपि काव्यानां जानाति विरलो भुवि ।
मार्मिकः को मरन्दानामन्तरेण मधुव्रतम् ॥ ७२

धत्ते भरं कुसुमपत्रफलावलीनां घर्मव्यथां वहति शीतभवां रुजं च ।
यो देहमर्पयति चान्यसुखस्य हेतोस्तस्मै वदान्यगुरवे तरवे नमोऽस्तु॥ ७३

हालाहालं खलु पिपासति कौतुकेन कालानलं परिचुचुंबिषति प्रकामम् ।
व्यालाधिपं च यतते परिरब्धुमद्धा यो दुर्जनं वशयितुं तनुते मनीषाम् ७४

दीनानामिह परिहाय शुष्कसस्यान्यौदार्यं प्रकटयतो महीधरेषु ।
औन्नत्यं परममवाप्य दुर्मदस्य ज्ञातोऽयं जलधर तावको विवेकः ॥ ७५

आपद्गतः किल महाशयचक्रवर्ती विस्तारयत्यकृतपूर्वमुदारभावम् ।
कालागुरुर्दहनमध्यगतः समन्ताल्लोकोत्तरं परिमलं प्रकटीकरोति ॥ ७६

सत्पूरुषः खलु हिताचरणैरमन्दमानन्दयत्यखिललोकमनुक्त एव
आराधितः कथय केन करैरुदारैरिन्दुर्विकासयति कैरविणीकुलानि॥ ७७

अप्राज्ञेन च कातरेण च गुणः स्यात्सानुरागेण कः
प्रज्ञाविक्रमशालिनोऽपि हि भवेत् किं भक्तिहीनात् फलम् ।
प्रज्ञाविक्रमभक्तयः समुदिता येषां गुणा भूतये
ते भृत्या नृपतेः कलत्रमितरे संपत्सु चापत्सु च ॥ ७८

उदयति हि शशाङ्कः कामिनीगण्डपाण्डु-
र्ग्रहगणपरिवारो राजमार्गप्रदीपः
तिमिरनिकरमध्ये रश्मयो यस्य गौराः
स्रुतजल इव पङ्के क्षीरधाराः पतन्ति ॥ ७९

पुरः पूर्वामेव स्थगयति ततोऽन्यामपि दिशं
क्रमात्क्रामन्नाद्रिद्रुमपुरविभागांस्तिरयति ।
उपेतः पीनत्वं तदनु च जयस्येक्षणफलं
तमःसंघातोऽयं हरति हरकण्ठद्युतिहरः ॥ ८०

प्रिया न्याय्या वृत्तिर्विनयमधुरो वाचि नियमः
प्रकृत्या कल्याणी मतिरनवगीतः परिचयः ॥
पुरो वा पश्चाद्वा तदिदमविपर्यासितरसं
रहस्यं साधूनामनुपधि विशुद्धं विजयते ॥ ८१

पततु नभसो गच्छत्वस्तं निमज्जतु वारिधौ
व्रजतु वरुणागारद्वारं प्रभाभिरनादृतः ।
तदपि तरणिर्दत्त्वा पादं शिरःसु महीभृतां
दलिततिमिरव्रातः प्रातः पुनः सकृदेष्यति ॥ ८२

निद्रामीलितलोचनो मृगपतिर्यावद्गुहां सेवते
तावत्स्वैरममी चरन्तु हरिणाः स्वच्छन्दसंचारिणः ।
उन्निद्रस्य विधूतकेसरसटाभारस्य निर्गच्छतो
नादे श्रोतृपथं गते गतधियः सन्त्वेव दीर्घायुषः ॥ ८३

सौरभ्येण त्रिभुवनमनोहारिणा काननेऽस्मिन्
सत्कस्तूरीहरिण भवता वासितो दिग्विभागः ।
तस्यैतत्ते फलमुपगतं पत्रिभिर्लुब्धकानां
विद्धः प्राणांस्त्यजसि न गुणः श्रेयसे निर्गुणेषु ॥ ८४

वनान्ते खेलन्ती शशकशिशुमालोक्य चकिता
भुजप्रान्तं भर्तुर्भजति भयहर्तुः सपदि या ।
अहो सेयं सीता दशवदननीता हलरदैः
परीता रक्षोभिः श्रयति विवशा कामपि दशाम् ॥ ८५

कस्मादिन्दुरसौ धिनोति जगतीं पीयूषगर्भैः करैः
कस्माद्वा जलधारयैष धरणिं धाराधरः सिंचति ।
भ्रामं भ्राममयं च नन्दयति वा कस्मात्त्रिलोकीं रविः
साधूनां हि परोपकारकरणे नोपाध्यपेक्षं मनः ॥ ८६

कुमुदवनमपाश्रि श्रीमदम्भोजखण्डं
त्यजति मुदमुलूकः प्रीतिमांश्चक्रवाकः ।
उदयमहिमरश्मिर्याति शीतांशुरस्तं
हतविधिलसितानां ही विचित्रो विपाकः ॥ ८७

क्षुद्राः संत्रासमेतं विजहित हरयः क्षुण्णशक्रेभकुम्भा
युष्मद्देहेषु लज्जां दधति परममी सायका निष्पतंतः ।
सौमित्रे तिष्ठ पात्रं त्वमसि न हि रुषां नन्वहं मेघनादः
किंचिद्भ्रूभंगलीलानियमितजलधिं राममन्वेषयामि ॥ ८८

परार्थे यः पीडामनुभवति भंगेऽपि मधुरो
यदीयः सर्वेषामिह खलु विकारोऽप्याभिमतः ।
न संप्राप्तो वृद्धिं यदि स भृशमक्षेत्रपतितः
किमिक्षोर्दोषोऽसौ न पुनरगुणाया मरुभुवः ॥ ८९

दृष्ट्वा स्फीतोऽभवदलिरसौ लेख्यपद्मं विशालं
चित्रं चित्रं किमिति किमिति व्याहरन्निष्पपात ।
नास्मिन्गन्धो न च मधुकणा नास्ति तत्सौकुमार्यं
घूर्णन् मूर्ध्ना बत नतशिरा व्रीडया निर्जगाम ॥ ९०

छाया संश्रयते तलं विटपिनां श्रांतेव पांथैः समं
मूलं याति सरोजलस्य जडता ग्लानेव मीनैः सह ।
आचामत्यहिमांशुदीधितिरपस्तप्तेव लोकैः समं
निद्रा गर्भगृहं सह प्रविशति क्लान्तेव कांताजनैः ॥ ९१

वरं तुंगाच्छृंगाद्गुरुशिखरिणः क्वापि पुलिने
पतित्वायं कायः कठिनदृशदन्तर्विदलितः ।
वरं न्यस्तो हस्तः फणिपतिमुखे तीव्रदशने
वरं वह्नौ पातस्तदपि न कृतः शीलविलयः ॥ ९२

क्षीरिण्यः सन्तु गावो भवतु वसुमती सर्वसम्पन्नसस्या
पर्जन्यः कालवर्षी सकलजनमनोनन्दिनो वान्तु वाताः ।
मोदन्तां जन्मभाजः सततमभिमता ब्राह्मणाः सन्तु सन्तः
श्रीमन्तः पान्तु पृथ्वीं प्रशमितरिपवो धर्मनिष्ठाश्च भूपाः ॥ ९३



# APPENDIX A.

## Introductory Notes.

( *The figures within brackets below refer to the corresponding number of foregoing stories.* )

( 2 ) On the bank of the lake Pumpa, there lived near Matanga's hermitage, a Bhil woman, named Shramana. She spent her time in serving the Rishis and living as an ascetic. At the time of leaving this mortal world, her Guru told her that she would get salvation when Rama came to the Dandak forest and met her. She awaited the advent, saw Rama in the end and got salvation, through the mercy of the Divinity, who was mightily pleased with her devotion.

( 6 ) Rama, while returning in Pushpak Viman to Ayodhya after killing Ravan, describes to Sita the old places, which they had visited before.

( 18 ) Poet Jagannath sitting on the banks of the Bhagirathi with his Mohamedan sweet-heart was offering prayers to the Ganges for their deliverance. The waters of the Bhagirathi rose each step as he uttered a verse sung in honour of the river and at last at the ricitation of the 52nd verse the river flooded to the point where the poet was sitting and absolved him and his mistress from all sin. The poem is known as "Ganga Lahari."

( 21 ) This relates to Sita's abandonment by Rama to avoid public censure and return of Rama to Dandakaranya

to kill Shambuka. The story is related by Atreyi to Vasanti.

( 23 ) Once upon a time Durwasa Muni paid a visit to the hermitage of Kanva, when Shakuntala, daughter of Kanva, was deep in thought of Dushyant. Consequently she could not receive the sage with proper hospitality. He was thus enraged at this conduct of Shakuntala and in a fit of rage, pronounced a curse upon her, saying "Oh Shakuntala ! he, in whose love you are so deep will forget you ". One of her companions on hearing this, laid herself prostrate before him and entreated him to forgive her friend for her only fault. The sage was appeased and revoked his curse saying that Dushyanta would recognise Shakuntala on seeing the special gift of love given to her by him. Dushyanta had given to Shakuntala a signet ring bearing his name while going back from the hermitage of Kanva. Her female friends knew of it. They were thus certain that what their friend had by way of present from the king would remind Dushyant of his love and the curse uttered by the sage would have no effect. The female friends however did not inform Shakuntala of the curse, but had only warned her to take good care of the ring when she left for her husband's house. Shakuntala passed the Shachi teerth on her way to her husband's house and while making obeisance to it she happened to drop her ring into it unwittingly. Meanwhile a fisherman went to the Shachiteertha for fishing and caught in his net the particular fish which had swallowed the ring. On returning home and while cutting it he found the ring. He was overjoyed at seeing that the ring was set with precious stones. He went to the king's capital to sell it in the market and the Police officer seeing that it bore the seal of Dushyanta suspected and caught hold of the

fisherman and taking him to be a thief, asked him to explain how he happened to come by the ring. Thereupon the fisherman related the whole account. Then the officer took the ring to the king. The sight of the ring reminded the king of Shakuntala whom he had sent back in disgrace. He at once ordered release of the fisherman and gave him reward. The extract gives the mode in which the Police officer and his subordinates arrested the fisherman and traced the signet ring and how justice was given in the end by the king.

( 26 ) Urvashi had entrusted her newly-born son by Pururava to an ascetic living at the Ashram of Chyavana. One day this boy accompanied other children of the Ashram to the adjoining forest to fetch flowers for worship. There he saw a vulture with a piece of flesh in its mouth perched on a tree. He at once darted an unfailing arrow at it. As soon as the sage heard of this he asked the ascetic to take the boy back to his mother. Accordingly she took the boy and made him over to Urvashi at Pururava's. The piece of flesh described herein was not what it looked, but was a jewel named Samgamaniya, which the bird had picked up from the plate in charge of a maid-servant of Pururava. This jewel was particularly dear to the king; because, true to its name, it had caused his reunion with Urvashi.

( 28 ) Rama returned to Panchavati after killing Shambuka where he met his old acquaintance, the sylvan nymph, Vasanti. She had learnt of the desertion of Sita by Rama. After duly welcoming Rama, she spoke in hard terms to him for his thoughtless act.

( 32 ) Bhima goes to Dharma besmeared with the blood of Dusshasan and Duryodhan whom he had killed. King

Dharma takes him to be Duryodhana at first, but afterwards recognizes him. Bhima then braids the loose hair of Draupadi with his own hands as vowed.

( 33 ) King Pururava was reunited to Urvashi through the Sangamaniya jewel which he had got from a sage. While a maid-servant was taking the jewel in a plate, a vulture, mistaking it for a piece of flesh seized it and fiew away. The king on being informed of this was about to shoot an arrow at it when he found that it had gone beyond the range of his sight The king then passed orders for the bird's capture. The bird was sitting on a tree in the hermitage of Chyavana. The son of Pururava who was kept there, darted an arrow at it, and the bird immediately fell dead. Afterwards the jewel was taken to the king by his servants.

( 35 ) King Dasharatha came to the banks of the Tamasa in course of hunting. He heard some noise which was produced while Shravan was filling his jar with water. Shravan was the son of an ascetic for whom the dutiful son was taking water. The king thought the noise was caused by an elephant sucking water by its trunk, and he darted an arrow in the direction of the sound. It unerringly hurt the ascetic's son mortally, who exclaimed, " Oh father ? " The king was taken aback on hearing this and he at once went near him. He found that the arrow had pierced his heart and that the boy had become restless and was dying. The ascetic's son narrated his whole account in a faltering tone. The king thereupon took the boy to his parents and informed them of the accident. They asked him to cremate them with the body of their son and cursed that he ( king ) should die of the pangs of separation of his son. The king cremated them and returned to the capital in grief.

( 40 ) This contains the massage sent by Kanva to king Dushvanta with Sharngrava and other pupils.

( 41 ) King Aja of the famous Raghu-dynasty was once sitting in a pleasure garden, with his queen, Indumati, when a garland fell upon her from above from the lute of Narada. The queen died as soon as the garland touched her. The king mourned her death.

---

# APPENDIX B.

## Explanatory Notes and Exercises in Grammar Idiom, etc.

**(1)** हस्तदघ्नम्—**As deep as hand. Name the forms** उक्तं, प्रापयितव्यम्, मामकीनम्. **Where can you use a locative absolute construction? Point out instances of it in the extract.**

**(2) Write the story of** शबरी **in the words of** व्यास. अमृतादीषन्न्यूनान्यमृतकल्पानि. शोभनो गन्धो येषां तानि सुगंधीनि, ब. । प्रसृतौ अंजली येन स प्रांजलिः, ब. । **Explain the forms** सनातन **and** शुश्रूषणम् । **What moral does this story convey?**

**(3)** सर्वथादैवावलंबः—**Entire dependence on fate.** अनागतस्य विधाता—अनागतविधाता—**One who provides for what is not come, that is future.** प्रत्युत्पन्ना मतिर्यस्य स प्रत्युत्पन्नमतिः—**A ready-witted person.** यद्भविष्य **is one who says what is to take place will take place.**

**(4) Name the forms:**—धर्म्यम्, आयसम्, प्राप्तवान्, पितृपैतामहम्, **and** आदितः **Name and explain the compounds** सागरान्ता (मही) धर्ममूला, (श्रीः), **and give their meaning. What do you understand by** चारैः पश्यन्ति राजानः? नानुबन्धमवेक्षते—**Does not mind the consequences.**

**(5) Name the forms** विस्मापयन्ति, सुखयन्ति, **and** अज्ञासिषम्. **Write grammatical notes on:**—श्रमः फलोदयाय कल्पते **and** विरमेद्दुशास्त्रंरभात्. **Give corresponding Marathi expression for** पाणितलस्थे निदर्शने कुत इयद्दूरम्?

**(6) Mention all the names of persons and places in the lesson and say what you know of each. Name the compound** तोयदः, कुलपतिः, वैश्वानरोपमः & योजनबाहुः **and explain them.**

**(7)** जाया च पतिश्च दम्पती । एकशेषद्वंद्वः । गर्भमाधत्त—**Conceived** आसन्नः प्रसवः यस्याः सा आसन्नप्रसवा; ब. स.—**About to be confine** अण्डमोक्षणम्—**The laying of eggs.** समुद्रवेला चलति—**The tide of th**

sea comes up. मात्रा—Account, consideration. दूषयिष्यति—Will hurt or injure. विश्रब्धा-Free from fear. अहो...कीटस्य Oh! how great is the pride of this wretched bird! प्रमाणम्-Real strength. कुतूहलादपि—Out of curiosity at least. अहंकारमाश्रित्य-Having recourse to pride, elated with pride. कस्ते...विग्रहः—How can you wage war with the sea? विक्रमन्ते-Overcome, conquer. शुष्कस्थलतां-To the position of dry ground. विप्रुषवाहिनीं-Carrying only a drop. अनिर्वेदः--Absence of dejection. अहोरात्र is usually masculine. असार *a.* Trifling. समवायः-Union, combination. दुर्जय *a.*—Hard to overcome. विनताया अपत्यं पुमान् वैनतेयः-गरुडः। परिभवस्थानम् Humiliating incident. वैरानृण्यं गच्छति—Will avenge the injury. देवकार्येण--On an errand of the gods. कुत्सितो भृत्यः-कुभृत्यः; क. स. मदीयो...वाच्यः-Give him my respects. अपमानस्थानम्-Cause of disrespect. आश्रयभूत *a.*-Being a sheltering place. निग्रहः--Punishment, chastisement. त्रपाधोमुख-With the head hung down through shame. युष्मल्लज्जया-Through fear of bringing shame upon you. आग्नेय *a.*-Presided over by fire. सन्धा—To aim. नो चेत्स्थलतां नयामि--Or else I shall reduce you to the position of land or turn you into land, *i. e.* dry you up.

(8) समा क्रिया यस्य तत् समक्रियम्। Name the forms विकीर्य, निरूप्यताम्, मलिनीभवन्ति, सोढुम्, कापुरुषः, पुलकितः and प्रबोध्य. Name and dissolve the compounds:—बहुश्रुताः हितबुद्धयः, मूषकराजः, शतद्वारं (विवरं), सविस्मयः, आत्मपरित्यागः, and प्रहृष्टमनाः, प्रकृतिसिद्धम्—Natural, inborn, innate. संहतिः कार्यसाधिका-Union is strength. वशमेष्यन्ति-Will fall into my power. चक्षुर्विषयातिक्रान्तः-Passed beyond the range of the eye. एकचित्तीभूय-Being of one mind. निपतिष्यन्ति-Will fall out. कार्यकारणगतः-According to the law of cause and effect. वृद्धानां...प्रवर्तनम्-The counsel of the old should be followed only when there is a calamity at hand. If we consider thus in all matters we can hardly proceed to take our food.

(9) प्रत्यासन्नकल्पः--Has nearly approached. The suffix कल्प is added to nouns, adjectives and even to verbs in the sense of 'almost,' 'nearly,' &c. नो शरव्यं कर्तुम्-To shoot us both. इषुं संधा To take aim. अधिज्यं धनुर्यस्य सः, अधिज्यधन्वा ब. स.। परिश्रमश्रान्ते-

Keeps wheeling round. The present participle of a root used with the verbs आस्, स्था, भू, &c. shows continuity of the action expressed by the root. तृणनाशं नश्येयुः-Will disappear like straw. नाशम् is a gerund in अम् ( णमुल् ). *Vide* Apte's Guide Sec. 161 (b). कोऽर्थः...चिंतया-What is the good of our being anxious ? For the use of अर्थ, meaning 'use,' with the instr.. *Vide* Apte's Guide Sec. 59. Name the forms जिघत्सुः, चिराय, बलीयसी, अध्यवात्सीत्, अवस्कद्य and अवसित. Name the compounds इष्वसनमुक्तः, जीवितापहः, अत्तुकामः, and मृत्युभयम्.

( 10 ) Give all the synonyms of कुठार, सुवर्ण, वरुण and वनवासिन् occurring in this passage. Name the forms मुक्तकंठम्, शातकौंभम्, प्राक्रंस्त, अचकथत् and सत्यीकृत्य.

( 11 ) Name and explain the compounds:—विगतक्लमा, विजनं ( वनम् ), पुरुषर्षभः, पतिव्रता and महाकायः Name the forms भैमी, वाशती, आलीयते, तृषित, and तपस्विनी. गिरः सम्यक् कर्तुम्-To prove true or faithful to ( your ) promise or word.

( 12 ) न्यायादनपेतं न्याय्यम् । युवा चासौ राजा च युवराजः, क. धा. । कृतः शपथो येन स कृतशपथः, ब.। Name the forms:-अन्वव्राजीत्, अचीकरन्, and आदेशि. अधमा वयस्या वयस्याधमः, क. धा. । संगमन्वव्राजीत्-Kept company. नृपतेरसदृशानि—Unworthy of a prince. अस्तु नाम...वा Prince or no prince. न युज्यते—You have no right or it does not become you. दोषपरिच्छेदाय—To take or stand his trial or for trial. स्थापितापराधः-Was found guilty. कारा...सखस्य—Prison is no place for a prince's friend. कृतशपथोऽस्मि न्यायदर्शने—I have sworn to do justice. विरमेदृशात् संरंभात्—Cease from such a riot or violence. This is an adaptation of the well-known story of Henry V of England when he was heir-apparent to the throne.

( 13 ) नास्माकं कामपि चिन्तां करोति-Does not care to fulfil our desires. साधितं-Secured. वर्तितं-Drawn. निरूपितस्तिष्ठति—Is fixed or appointed. प्रस्तावे समागतोऽसि—You have come just in time or at an opportune moment. रात्र्यन्धाः—Blind during night. शशकपिंजलमार्गेण यास्यन्ति-Will meet the same fate as शश & कपिंजल did. Give

the synonyms of उलूक in this lesson. Distinguish the forms :- वैनतेयः, विघ्नितः, आसादयता, ईप्सितम्, and ब्रुवाणाः.

( 14 ) पञ्चत्वं गम्-To die, to expire. जीवितनिर्विशेषौ-As dear as life itself. बहु श्रुतं यस्य सः बहुश्रुतः-Well informed, very learned. गच्छता कालेन-In course of time. वशात्-Owing to. प्राणाः meaning life is always plural. एवं गते-Such being the case. आयुःशेषतया-On account of having some life remaining. अश्रुभिः सह-साश्रु; साश्रु मुखं यस्य सः साश्रुमुखः. Explain the construction in ( a ) त्वया मौन व्रतेन भवितव्यम् ( b ) तेषां मिथः संवदताम्. Name and dissolve the compounds नष्टप्रतिभः, मौनव्रतः, and लगुडहस्तः. Name fully the forms व्यापाद्यत, निषण्णः and स्मर्तव्यः.

( 15 ) अन्यो ग्रामो ग्रामान्तरम्; क. स. । स्कन्धे कृ To throw across the shoulder. अभिमुखं--Toward, in the direction of. यजमानः--An house-holder. वेषपरिवर्तनं विधाय--Having changed his dress. अद्यतनीय--to day's, belonging to this day. हिमपातो...... नीयते--the falling down of frost will have no effect. आहिताग्निः--A Brahmin keeping the sacred fire. भवान्...प्रतिपादयति---You assert that a goat is a dog. आत्मन...समाचार---Act as you think proper. स्वगृहमुद्दिश्य--towards his house; homeward. Name the forms क्षामः, यथेच्छम् and सकोपम्. आरब्ध has an active sense.

( 16 ) Name and dissolve the compounds:--ग्रासैकबद्धस्पृहः, निःसीमानः, कृशधनः, कृच्छ्रगतः, पंचषाः, and मध्येपृष्ठम् and fully name the forms वैरायते, शीर्षावशेषीकृतः, न्याय्यः and अनुविधेयः

( 18 ) Name and dissolve the compounds:--दिविषदः, दुर्वासन-हृदाम्, त्रिविधः and त्रिपथगा; and name the forms:-स्वादीयः, सुधातः, ददाना, यातीनाम्, अम्ब and अमलीकरोतु.

( 19 ) उद्धारित-Saved or spared. शत्रुदर्शने विमुक्तौ--For relasse at the sight of the enemy. कूटपाशनियंत्रित--Caught in a trap. बाष्पावसाने--After shedding tears. अस्मद्विधैर्मित्रैर्विद्यमानैः-When there are friends like us alive. This is an instance of the instr. absolute. कुब्जगामिन्यः-Going astray from the right path. आस्ताम्-

Let aside. आकर्णपूरितशरासनः—With his bow drawn as far as the ear. छिद्रेष्वनर्था बहुलीभवन्ति—Misfortunes never come single. जीवितधर्मः—The way or mode of life. दृष्टिगोचरान्न नीयते—Is not carried beyond the reach of sight. आयुःशेषजीवित—आयुःशेषाज्जीवितः—Alive as his life had not ended. क्षुत्क्षामः-Parched with hunger. समम्-As well as. तत्रापि सज्जोऽस्म्यहम्-I am even ready for that. नयंति स्म-Passed, spent.

(20) Distinguish the forms:-स्थगयति, स्थविष्ठ, छिद्रित and दवीयसि.

(21) विश्रांतास्मि—I have had rest. अपि-Introduces a question in अप्येतत्तपोवनम् and the following sentences. प्रासंगिकी-Occasianal. विषयः-Theme. नाम शेषो यस्याः सा नामशेषा--Existing in name only. सापवादमपि--With calumny too. निर्घातः--A stroke, blow. निर्माणभागः-Lot, fate. अलं त्वया--Enough of you. हा कष्टम्--O misery! गुरुजनः-Elderly persons. अधिष्ठित-Guided. अनुरोधः-Approval. क आरंभो यस्य स किमारम्भः-How is he engaged? प्रक्रान्तः-Begun. शान्तं पापम्-Heaven forbid! लोकोत्तराः-Supereminent. सस्नेहकौतुकास्रम्-With tears of affection and wonder. सोरस्ताडनम्--Beating his bosom. अब्रह्मण्यम्-An outrage upon the Brahmin. अंतरेण-*ind.* Without, governs the Acc. case. अकाल-Premature, untimely. निरूपय-To reflect upon. अशरीरिणी—Aerial, heavenly. जीवय--Restore to life. Distinguish the forms आरब्धवान्, धूमपः and कठोरीभूतः.

(22) Name and dissolve the compounds: बहुदोषं (वनं), निरपाः (मार्गाः), अहोरात्रम् and यथाप्राणेन and explain the forms: भोक्तव्य आर्यः, and ब्रुवती. Mark the use of अलम् in तदलं ते वनं गत्वा.

(23) नागरिको नगररक्षाधिकृतः— The Mayor. श्यालः -- The King's brother-in-law. उद्घालाः-Hooks. आजीवः-Profession. विशुद्धः-Pious, (said ironically). खण्डशः कल्पितः-Was cut into pieces. मर्शयितव्यम्-Should be inquired into. गण्डभेदकः-A pick-pocket. शासनम्-Orders. चिरायते-Has been long away. उपसर्पणीय-Can be approached. भावयितुम्-To contemplate. साक्षिकम्-In the company of; in the presence of. Name the compounds पत्रहस्तः and मूल्यसंमितः and explain them. Name the forms-दापितः, अवतार्य, स्मारितः विमर्शयितव्यम् and

चिरायते. Explain the construction in तेनाङ्गुलीयकेन भर्तुः सम्मतेन भवितव्यम्.

(24) पराञ्च्-a. Unfavourable, adverse. बन्धुरत्नम्-बन्धुषु रत्नमिव-The best friend or companion. रत्नम्-Anything best or excellent of its kind, mostly at the end of a comp. भंगिपदानि—The cause of breaking, humbling. यदवधि-Since. दूषण, रस, गुण. भाव, अलंकृति, and वर्ण have each a double meaning, the one applicable to the poet's beloved and the other to his poem. अर्थमयः—Significant. नम्य-Fit to be saluted. Name the forms-वशंवदा, व्यतानीत, अधिरोपितवती, अपास्तम्, अशरणः and उज्झितः.

(25) Name the forms:-हस्तपादम्, प्रयानम्, अजानानाः, दग्धुकामाः, वशीकृत्य, जातुषम् & एवंविधाः. Explain the forms of the Aorist in the lesson.

(26) Name the forms:--बाष्पायते, हार्दम्, न्यासीकृतः & विस्तारयिता. Turn into English:--बाणस्य लक्ष्यीकृतः, कवचहरः संवृत्तः & सनाथः खलु संवृत्तः Explain the grammatical peculiarities in the following:--भर्तुर्बहुमता भव, द्वितीयमाश्रममध्यासितुम्, and स्वस्ति भवते।

(27) स्वायत्तम्-At one's command. एकान्त—Never failing in its effect. मद has a double meaning (1) rut, and (2) vanity, arrogance. Explain the last lines of verses 4, 5 and 6.

(28) मधूनि श्चोतयन्ति (क्षरन्ति) इति मधुश्चुतः *Ad.* to तरवः. meaning 'dripping floral juice.' अश्रुतिमभिनीय-A stage direction meaning 'not hearing' निष्प्रणयम्-Cold. आमन्त्रणपदम्-Title of address प्रियाणि Loving expressions. अनुरुध्-To flatter. मुग्ध-*i.* Guileless, शान्तम्... उत्तरेण-Or peace! why talk more? हरिणीदृश्-A fawn-eyed maid. एकं हायनं (वर्षम्) यस्य स एकहायनः। किल—I hear. ते ते भावाः-Those various scenes and incidents. देव...अवलम्ब्यताम्-My lord, summon courage now when matters have already come to this pass. न च रामो न जीवति-And yet it is not that Rama doest not exist. देव्या शून्यम्—Bereft of सीता. अलातशल्यम्—A heated or fiery dart. कृंतन्—Corroding. संस्तुत—Familiar. कष्टमभ्यापन्नः—Got into a

painful mood. अन्यतः क्षिप् To divert. चिरमभूत्--Tarried long. दुर्मनायित--Out of temper. इव--Somewhat. विश्वङ्मोह -Universal stupor.

(29) पारक्यः--A stranger. प्रयुक्तः--Instigated. विपक्षः--An enemy. निष्कारणः--Disinterested. हितकामाः--Well-disposed, having welfare at heart. वाक्यमभिनन्दति--Approvingly follows the advice. यथाकर्तव्यम्---what is proper to be done. सुखशोभार्थम्---For prosperity and glory. अवसानम्—End. विगृह्यमाणाः---warred against. वशं या---To fall into the hands of. सामदामदण्डभेदाः---Conciliation, ( giving ) gifts, ( sowing ) discord and chastisement. विजिगीषवः--Wishing to make conquests. उत्साहः---Energy. मन्त्रः---Counsel. प्रभुशक्तिः—Power due to the possession of adequate army and treasury. एवं क्रियताम्--Let this policy be adopted. कोपः--Disturbance. सगुप्तलेखं दत्त्वा--With a confidential letter. प्रस्थापित—Sent.

( 30 ) सनाथम्--Full of. जलचराः--Water-animals उ. त.; सनिःश्वासेन स्थीयते--Remain sighing. लग्ना संपद्यते-Is close at hand; is closely impending. शनैश्चरः...प्रयास्यति--Saturn will pass through the cart of Rohini. ' The constellation called रोहिणी is figured by a cart. It is supposed that the passage of Saturn and other planets through this constellation portends evil, such as drought, famine &c.' V. S. Apte. शोषं यास्यति—Will dry up. बीजशेषं.........नोद्धरिष्यति—The lake will not preserve here even their seed as a remainder. विश्वासमापन्नाः—Inspired with confidence. व्यंजनस्थाने करोमि Shall use as a condiment. उद्दिश्य-Towards. स्थले न प्रभवति-Is powerless on land. प्राणयात्रा--Subsistence, maintenance. कुशलकारणं तिष्ठति— Is there any cause ( in your return ) that concerns our walfare ? तत्किं चिरयसि—Why do you then delay telling us your motive in coming back to this place ? कृतक्षणाः—Waiting impatiently for the right moment. आयुःशेषतया--By reason of the remainder of life. अलं संभ्रमेण—Enough of rashness. Name the forms :--दुःखितः, आरोप्य, चिंतितवान्, निर्विण्ण, and चिरयासि.

( 31 ) माता च पिता च पितरौ; एकशेषद्वन्द्व स. तरीतुमिच्छुः तितीर्षुः- Desiderative noun. उद्बाहु:--उद्गतौ बाहू यस्य सः, ब. व्री. Name the forms विजिगीषुः, संपृक्त, and चापलम्. प्रतिपत्तिः--A right understanding. कवियशःप्रार्थी --Aspiring after the fame of a poet. The repetition of क्व as in the second verse, shows great difference or excessive incongruity or unfitness. तनु वाग्विभवं यस्य स तनुवाग्विभवः-possessing scanty powers of speech तद्गुणै...प्रचोदितः--I am impelled to rashness by the report of their virtues coming to my ears.

( 32 ) Explain the use of अलम्, कृतम् and समम्, giving illustrations from this passage. In how many ways can the compound मुखचन्द्रः be explained ? Write notes on :—केशहस्तः and विस्मृताऽसि व्यापारमेनम्.

( 33 ) नन्दनवनम्--Not the garden of इन्द्र, but one of the forests of गन्धमादन frequented by heavenly beings. वर्जयित्वा--Excepting. अस्य न किमपि हीनम्--He has nothing wanting. तिथि विशेषः--A special day or occasion. उपकार्या--A royal palace. अलंक्रियमाणः--Whose toilet was being performed. अनुलेपनमाल्यभागी भवामि—Shall share the perfumes and the flowers ( intended for him ), तालवृंताधारः—A casket of palm-leaves. दुकूलोत्तरच्छदः-Covered with a silk handkerchief. आत्मनो वधमाहर्ता—Bringing down death upon himself. अलातः--A firebrand. मण्डलचारशीघ्रः--Moving rapidly in circles. अलमत्र घृणया—No mercy in this case. दक्षिणान्तेन—Towards the South. अवतंसकं करोति–Provides an ornament for the crest. हस्तावापसहितम्–With the glove. बाणपथमतीतः-Gone beyond the range of an arrow. परिगतार्थोऽस्मि कृतः—You have already told me that. प्रवेशय—Keep.

( 34 ) सनिर्वेदं निःश्वस्य-heaving out a melancholy sigh. देहली-The threshhold of a door.सारसः:The Indian crane, a swan (according to some ). विलुप्त -carried off. न मम अर्थान् प्रति दैन्यम्-my misery is not in regard to money,money does not occasion my grief.अतिथिः-a visitor who stays only for a day, सान्द्र–Thick. मदलेखा- a stream of ichor. भ्रमन्तः—hovering about. कपोलः-Temple. कालात्यये-after a while. अर्थकल्यं-early morning. वर्त-That by which one subsists.

कल्यवर्त–Something eaten for breakfast, hence a trifle. अर्थकल्यवर्ताः 'Vile trash' of money. दास्याः पुत्राः अर्थकल्यवर्ताः–These rascal or base born counters. खाद्यन्ते–are bitten, also enjoyed. सत्त्वात्परिभ्रश्यते—loses in spirit. परः परिभवः–a great insult. निर्वेदः temporary depression of spirits. शुच्–settled melancholy. अपरम्–Supreme. जुगुप्सा–censure. शोकाग्निः–woeful fire. वर्धताम् भवान्–May you prosper. शोकपिहितः–overpowered by grief. जूर्णवृद्धः—The friend of the सूत्रधार सिद्धीकृत finished. देवकार्य–evening prayers and oblations.

(35) Name and dissolve the compounds :—प्राप्तानुगः, अम्बुराशिः, सदारः, गन्तुमनाः, गतघृगः, द्विजेतरः दम्पती, परासुः and इन्धनेद्धः. Name the forms :—उरस्तः, कृतवान्, पातितः, अपराद्धः and संपाद्य. Write notes on:–तुरङ्गमेण नदीं प्राप, ताभ्यां चरितं शशंस and नृपतेः प्रतिषिद्धम्. Explain the second half of verse 3. Relate the story of श्रावण in simple Sanskrit using as far as possible the words of कालिदास or वाल्मीकि.

(36) Name and dissolve the compounds देशान्तरम्, सत्वरम्, आख्यातुकामः, पक्षिराजः, कूपमण्डूकः, करगतम्, and name tha forms प्रदर्श्य क्षन्तव्यम्, एकान्ततः, पारगः, देवपादाः, स्वाम्यं, and यथाकर्तव्यम् ।

Write grammatical notes on :–(a) किमुपालम्भेन &c.( b ) तथानुष्ठिते सति. Name the forms :–प्रस्थाप्यताम्, सज्जीक्रियते and द्रष्टव्यः. What do you mean by भिद्यते षट्कर्णो मंत्रः ?

Write grammatical notes on :–जीवितेन श्रिया वा प्रयोजनम्, and उत्साहभङ्गं मा कृथाः. Name the forms :—प्रबोध्य, गलहस्तयति, अकुतोभयम्, and विजिगीषुः ।

Explain the form किंमन्त्री and the use of यावत्–तावत्.

Turn into English :—समृद्धामपि श्रियं दुर्नयो हन्ति, and विजिगीषोरदीर्घसूत्रतां विजयासिद्धेरवश्यंभावि लक्षणम् ॥ Name the forms पारुष्यम् and अभैषीः.

(37) दुहितृरत्नम्—A priceless daughter. आश्चर्यभूतम्—Most wonderous. एक...पानासना–From her birth sharing with me food, drink, seat and couch. अनियन्त्रणम्–Free from restraints. उचित–Belonging to. हतवृत्तान्तः–Unhappy story. पाणिं ग्राहयिष्यामि–Shall

accept a husband. अहम्...उत्स्रक्ष्यामि-I will end my life by hunger, fire, cord or poison. समुपारूढयौवना-Growth to full youth. बलवदु-पतापपरवशः-Pray to great vexation. क्षणमपि...लक्षत-For a time took pleasure in nothing. इदमत्र...मत्वा-Deeming the time non-ripe. देव्या सहावधार्य-Considering the matter with the queen. व्यतिरेक-Bad fate. इदमपरं...उपस्थितम्-This new thing has come upon us. कादम्बरी...शरणम्-To you we look to win back कादम्बरी. प्रत्युषसि-At early dawn. गौरवेण-In reverence to. प्रेम्णा-In love to. कथं... दुःखयसि-Why do you add grief to one already sad enough? अवितथं कुरु-Fulfil.

(38) Explain the forms वगाह्य, उद्गास्यताम् उच्चैःशिरसाम्, वोढः and प्रबोधयति. देवता आत्मा (स्वरूपम्) यस्य स देवतात्मा. Mark the use of दुह् in verse 2. अकालसन्ध्या-An untimely eve. अनङ्गलेखः-Love-letter. Point out the सुभाषित lines in this passage and explain their meaning.

(39) महावकाशतया--From its spaciousness. विश्रब्धविरचित a.—Confidently built. नभसि विरचितपंक्तयः--Forming lines in the sky, क्रोडान्तर्निहिततनयाः--With their young ones under their wings. अधरीकृत--Subdued. असाधारण-Uncommon. गुरु-Deep. कलममंजर्यः-Rice-clusters. पश्चिमं वयः—Old age. विधिवशात्--By the decree of Fate. प्रसववेदना-Pangs of childbirth. पटु-Keen. प्रसरः...Onrush. मदुपभुक्तशेषमकरोदशनम्--Made his own meal on what I left. अपर-Western. प्रभातसन्ध्यारागलोहित--Reddened by the glow of dawn. अन्तरित-Concealed. सर्वतः प्रचलितम्-Shaken on all sides. तां दिशं चक्षुः प्राहिणवम्- I cast my glance in that direction. प्रथमं वयः—Early youth. उत्खातमूलं...कुर्वते--Destroy (it) root and branch. सैंहिकेयः-Rahu. पुलिंदवृन्द—Barbarous troop. सोपानैरिव—As if by ladders. शुककुलानामसुभिरुत्क्रान्तमिव—The parrots seemed to have drawn their last breath. शंकामुपजनयतः—Creating a doubt of. मां...नालक्षयत्—He somehow did not notice me though I was within the wings, from my being small and curled into a ball from fear and from my not having lived my fated life. अति-

दूरपातः—A long fall. बलवती पिपासा मां परवशमकरोत्-I was possessed by a violent thirst. मुखेन पत्--To fall on (the) face. पक्षपाल्या संधारयन्--Supporting (myself) on one wing. अतिकष्टा अवस्थाः--The hardest trials. सुगृहीतनामा--Of well-chosen name, good. अविकल--Unimpaired. स्नेहादगणयन् क्लेशम्--Reckoning lightly in his deep love the toil. सर्वथा...जीविततृष्णा--Surely there is none that thirst of life does not harden. अप्रभुरस्म्यात्मनः—I am not master of myself अपि नाम...उपपादयेत्-O that pitiless fate would now bring that death which yet I desire not. सवयसः--समानं वयो येषां ते--Friends, companions. अकारणमित्राणि-Instinctively kind. श्येन...भवितव्यम्-His must have fallen from the month of a hawk. यावदसुभिर्न विमुच्यते-Before his hreath deserts him. अवतारय सलिल-समीपम्--Carry him to the water. मां सरस्तीरमानाययत्--He had me taken to the edge of the lake. नियमं...कृत—Of a surety, holy Dharma having taken up his abode here after quelling the riot of the Iron Age, no longer cares to recall the Golden Age. एतदवष्टंभात्—In his support. संतरणः...सिंधोः—A bridge over the ocean of transient existence. उपनाथितवती—Implored. आश्चर्याणां--प्रभवः--You are the fountain-head of all marvels. अल्पशेषम्-Almost spent. प्रत्यासन्न-Near. यथोचितम्-As is meet. विस्रब्धोपविष्ट-Resting quietly. आदितः प्रभृति--From the beginning. अयं...आहारेण-In she meanwhile let him be refreshed with food. दिवस-व्यापारः--Daily duties.

(40) Write grammatical notes on:--युक्तरूपम्, तत्रभवान्, मा भैषीः, भर्त्रा सार्धम्, मा उत्कण्ठित्वा. Name the forms:—साहयति, वक्तव्यः, दौष्यन्तिः and वनौकसः. प्रत्यभिज्ञानमन्थरः—Slow to recognise. स्नेहः पापशंकी--Love suspects evil.

(41) Name the forms:—प्रहरिष्यतो, नीरवा, विसहिष्यते, कृतवती, आभाष्यम् and आपृच्छथ. Name und dissolve the compounds:—हिमसेकविपत्तिः (नलिनी), पूर्वनिदर्शनम्, निरागाः, कैतववत्सलः, असंनिवृत्तिः, विश्रान्तकथम् (मुखम्), रहःसखी, अन्यदुर्लभम्, किन्नरकण्ठी and भृंगरुचः. Explain the uses of Future Participles.

( 42 ) राजापथ्यम्—Treason to the king. सदूरेण परिहरत—Keep far off ( from ); विषम—Dreadful. प्रतीथ—Believe. मोक्षोपाय:-Means of setting at liberty. शरणागतवत्सल-Kind to those who seek ( his ) protection. जीवितमात्रस्य कारणे—Merely for the sake of ( his ) life. तेन...गतिम्—Then wish him a blissful recourse or refuge.

( 43 ) Name the forms निर्वासिता, अवेक्षणीया, प्रपत्स्ये, सोढा, अहासीः वाच्यः and शरण्या. Name and dissolve the compounds:-समक्षम्, कामचारः, वर्णाश्रमाः, जननान्तरम् and निशाचरोपप्लुतभर्तृकाः। Write grammatical notes on-श्रुतस्य सदृशम्, मया सार्धम्, प्रसूतेरूध्वम्।

( 44 ) आहारः—A meal. परिसमापित-was ended. सन्ध्योचिताचार-The evening prayer. निर्वर्तित-said. विश्रब्धम्-fearlessly. निभृतम्-quietly. मुहूर्तं स्थित्वा-having paused a while. त्वत्प्रसाद...क्रियमाणः-bewildered by a curiosity that has taken courage from your kindness. मानुषतासुलभ:-That besets mankind. लघिमा—folly, weakness. प्रश्नकर्मणि नियोजयति-impels me to question ( you ). अधीरप्रकृतिः a weak nature. प्रभुप्रसादलवः-The slightest grace of the lord. प्रागल्भ्यम्-boldness. स्वल्पा कालकला-a short time. एकावस्थाने-spent together. परिचयः- intimacy. उपचारपरिग्रहः-acceptance of homage. आरोपयति-plants, produces. प्रणयः-affection. कथनेन...इच्छामि— I request you to honour me with your story. अतिमहत्...विषये-from my first sight of you a great eagerness has possessed me as to this matter. व्रतग्रहणम्-Taking of a vow. नवं वयस्-fresh youth. महाभूतानि-gross elements. अपनी—to dispel. लावण्यातिशयैः-exceeding grace. सुरलोकसुलभ-That gods may win. अनेक...संबाधानि-That hold all things needful for the highest saints. अपहाय-having left.

( 45 ) Turn into English :—मया निरागसा बन्धुदुःखमनुभावितेन किम्, अकालक्षेपक्षमं मे हृदयम्, भवानपि प्राणिधर्मे वर्तते, मया क्रीडनीयेन भवितव्यम्, व्यपनयामि ते कामचरितम्, न चांडालैः सह वागपि मिश्रिता, आत्मा विवेके न स्थापितः, and अहमप्यपगतकुतूहलः. Name the following forms and give their meaning:—पातयसि, अत्याक्षम्, अङ्गीकृतवान् and तादृशः.

( 46 ) तत्र-अलकायाम्. गृहाः *m. pl.*-A house. उत्तरेण *ind.*-To the north of. It governs *acc. case*,-व्यपगता शुच् येषां ते-व्यपगतशुचः-

अनतिप्रौढ–Not full grown or developed. क्षाम-Diminished. कलभतनुता–The small form of a cub of elephant. एकः–The one. अन्यः–The other. Explain यामध्यास्ते and अधरोत्तरम्.

(47) अवसानम्-Conclusion. स्वागतं व्याहरति-offers welcome. आहारः-repast. जलफलमूलमय-of water, fruit and root. प्रणयं कृ-to enjoy, to do justice to. मूकीभूत-Stilled. वीणा-lute. प्रशान्त-silenced. रुतम्-कुमुदिनी-a moon-lotus plant. प्रणामः—obeisance. परिवृत्य-turning round. प्रगल्भ-confident. समाश्वासयन्तीव-as if giving courage. शुद्धिं कृ-to free from stain. वरप्रदान्-giving (one) one's heart's desire. स्वागतमतिथये—Hail to my guest! अतिथिसत्कारः-a guest's due welcome. संभाषणमात्रेण-even by her beginning to speak with him. व्रजन् समर्थयामास-On the way he thought. तिरोभूता-Vanished. हृदि मे पदं कृतम्-has taken hold of my heart. दुर्लभ-rau. दाक्षिण्यम्-kindness. अभिजात-courteous. प्रतिपत्तिः-welcome. संभावयामि-trust. नियतम्-surely. पदशतम्-a hundred paces. वल्कलशयनम्-bark-bed. शिरोभागः-a pillow. विन्यस्त-laid. पर्णपुटम्-a leafy cup. निर्झरः Cascade. अलम्-enough. यन्त्रणम्-toils. कृतम्-cease. अतिप्रसाद-excess of grace. प्रशमनम्-stilling. अलम्-suffices for. आस्यताम-deign to take your seat. अनुबध्यमानः-being urged. सप्रश्रयम्-reverently. अतिथिसपर्या-Homage to the guest. प्रतिजग्राह-accepted. आतिथ्यम्- cares for the guest तथा परिपृष्टः-at the request. अनुसरण-pursuit. भिक्षाकपालं- a begging bowl. आयतनम्-a temple. अचिरेण-are long. स्वयंपतित-fallen of their own accord. भाजनम्-a bowl. उपभोगाय नियुक्तवती-invited him to enjoy. खलु of a truth. तपसामसाध्यम्-beyond the power of penance. आश्चर्यम्-a marvel. व्यपगत-devoid of. चेतना-sense. सचेतन-endowed with sense. चित्रमिदमालोकितम्-a wondrous sight is this! इन्द्रायुधः-The name of a horse. व्यपनीत-Taken off, removed. पर्याण-saddle. नातिदूरे-hard by. संयम्य-having tied. उपभुज्-to partake of. अमृतस्वादु-sweet as ambrosia. तुषारः-snow. एकान्ते अवतस्थे-waited apart. उपस्पृश्य-Having rinsed his month.

(48) Name the forms:-ददत्, अधिज्यम्, मन्दीकृतः, अतीत्य, व्यापाद्यमानः, हन्तव्यः, सन्निपात्यः, and आतिथेयः. Name and dissolve the compounds :-पश्चार्धम्, पूर्वकायः, समरेखम्, & अनुमालिनीतीरम्. अपर becomes पश्च when followed by अर्ध in a Tat. comp. Write grammatical or

explanatory notes on–मा भूत्, तरूणाम् अधः and सदृशमेतद्भवतः। निभृत *a.* Steady, motionless. अलंघनीय-Not to be assailed by. रथ्याः-रथं वहन्तीति-Horses. हरितः-Horses of the sun. हरीन्-The horses of इंद्र. आत्मनातृतीयः-Aluk. of the *inrs.* meaning-himself for the third, *i. e.* three in all. वैखानसः-A Brahmin in the third stage of religious life. खलु is a particle of conciliation or entreaty. क्व-क्व denotes vast disparity or contrast between two things. अतिपातः Omission, transgression, neglect. अभोगः-Extent. एतावति-At this distance. नाम *ind.*-As is well known.

---

# Sanskrit-English
## GLOSSARY

अ

अकाण्डे adv. suddenly, all of a sudden, unexpectedly.

अकारण *a.* disinterested, causeless.

अकुतोभय *a.* not threatened from any quarter, safe, secure.

अक्षम *a.* unable, unfit, incompetent.

अक्षेत्रम् *n.* A bad field.

अक्षोहिणी *f.* a large army consisting of 21870 chariots, as many elephants, 65610 horse and 109350 foot.

अगम्य *a* incomprehensible; unapproachable, inaccessible.

अगरु *n.* a kind of चन्दन.

अगुण *a.* having no good qualities, worthless.

अगोचर *a.* imperceptible by the senses, beyond the power of words.

अग्निहोत्र *n.* Maintenance of the sacred fire and offering oblation to it; an oblation to अग्नि; the sacred fire itself.

अग्र *a.* chief, principal;०महिषी = chief queen.

अग्रज *n.* an elder brother.

अग्रे adv. before, in front of.

अग्रेसर *a*, taking the lead, foremost, first.

अघमर्षण *a.* expiatory, removing or destroying sin, usually applied to a prayer repeated by Brahmins.

अंक *m. n.* The lap; stain, spot, stigma, brand; a mark or sign.

अंकुर *m. n.* a sprout, shoot; blade; pointed jaws.

अंकुश *m.* a hook or a goad.

अंगना *f.* a beautiful woman.

अंगराग *m.* a scented cosmatic, application of perfumed unguents to the body.

अंगविकल a. (अंगैर्विकलः) maimed; fainting.

अंगुलिः-ली *f.* a finger.

अंगुलीयकम् *n.* a finger-ring.

अंगुष्ठमात्र *a.* (मात्रा = परिमाणम्) of the length or size of a thumb.

अचिरम् adv. (also अचिरेण, अचिराय, अचिरात्, अचिरस्य) soon, not long since, recently, quickly, not long hence.

अचेतन *a.* inanimate.

अच्छ *a.* clear, pure, transparent.

अच्छोदम् *n.* name of a lake on the Himalay mountain mentioned in Kadambari.

अजगर *m.* a huge serpent who is

said to swallow goats.

अजातशत्रु a. having no enemy or adversary; m an epithet of युधिष्ठिर.

अजानिः m. ( नास्ति जाया यस्य ) a widower.

अजितेन्द्रिय a. Of uncontrolled soul or passion.

अजिन n. Skin of a tiger, lion, elephant &c. especially of a black antilope (used as a seat, garment &c. )

अजिह्म a. Upright, honest, straight.

अज्ञ a. Ignorant, foolish, unwise.

अज्ञात a. unknown.

अज्ञानतः adv. Unintentionally, inadvertently.

अंच् 1 v. To go, move, tend towards.

अंचित p. p. Woven, strung.

अंचल m. n. Border or end of a garment; skirt or hem ( Mar. पदर. )

अंजलिं बन्ध् or कृ Fold the hands together and raise them to the head in supplication or salutation.

अंजसा adv. Straight on, quickly soon, instantly.

अक्त p. p. Smeared over, annointed.

अण्डाकृति a. Eggshaped, oval.

अण्डक n. a. Small egg.

अतथा ind. Not so.

अतर्कितोपनत a. Occuring or befalling unexpectedly, quite accidental, sudden.

अतर्क्य a. Inconceivable, baffling thought or reasoning.

अतःपरम् a. Beyond this, further than this.

अति ind. Very. नातिदूरे ind. Not very far from.

अतिक्रान्त p. p. Exceeded, surpassed.

अतिग a. Going beyond, exceeding.

अतिगहन a. Impenetrable, very deep.

अतिथि m. A guest; o–सत्कार or क्रिया hospitable reception of guest.

अतिदूर a. Very far.

अतिपात m. Neglect, omission.

अतिमुक्तलता f. A kind of creeper ( माधवी, कस्तुर-मोगरा ).

अतिरभस m. Rashness.

अतिवह् 1. p. caus. To spend, to pass.

अतिवेलम् adv. Excessively.

अतिस्नेह m. Over-affection.

अतीत p. p. ( अति + इ + त ) Exceeding, going beyond.

अत्यय m. Passing away, lapse.

